# बृहत्स्तोत्ररत्नाकरः

## प्रथमो भागः



स्तोत्रसंख्या २११






नारायण राम आचार्य, "काव्यतीर्थ"
इत्येतैः संकलय्य संशोधितः



चतुर्दशं संस्करणम् १९५२

निर्णयसागर प्रेस, मुंबई २

मूल्यं ३ रूप्यकाः

# निवेदन



कलौ पापैकबहुले धर्मानुष्ठानवर्जिते ।
नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ॥

—ब्रह्मांडपुराण.

इस धर्म-आचारहीन कलियुगमें सांसारिक दुःखसे छुटनेका सिर्फ एकमेव साधन — भगवान् का नामग्रहण है, और कोई नहीं. चार तरहके लोग इस साधनका उपयोग करते हैं; गीतामें श्रीकृष्ण भगवानने भी कहा हैः 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन'—आर्त, जिज्ञासु, अर्थार्थी और ज्ञानी ये चार किसमके भक्त मेरा ध्यान, पूजन या स्तवन करते हैं. जैसे **आर्त**-ग्राहग्रस्त गजेन्द्र, द्यूतसभामें अपना अंगवस्त्र खींचनेपर लाजके मारे पुकार करती हुयी सती द्रौपदी; **जिज्ञासु**—मुचुकुंद, राजा जनक और उद्धव; **अर्थार्थी**—अचल सर्वोत्तम स्थानका अभिलाषी परम भक्त ध्रुव, बिभीषण, सुग्रीव; **ज्ञानी**—नारद, सनकादिक, शुक, और पृथु. भगवानने इन सभीको 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इस अपनी प्रतिज्ञाके अनुसार अभयदान देकर तुरंत मुक्त किये हैं. यह नितांत भक्तियुक्त स्तुतिका परिणाम है. इस ग्रंथमें ऐसीं सेकडों स्तोत्रें हैं जो भक्तिभावसे पठनेवालेका मनोरथ जल्द पूर्ण करनेमें समर्थ हैं. इन स्तोत्रोंका पाठ ऐहिक ऋद्धि-सिद्धिकी प्राप्ति और विपत्तिमें फँसे हुए शख्शको तुरंतही बचानेवाला है और पारत्रिक सिद्धिके लिए तो इसके सरिखा अन्य कोई उपायही नहीं है.

इस समय स्तोत्रोंकी संख्या बढनेके कारण इस ग्रंथको दो भागोंमें विभक्त करना क्रमप्राप्त हुवा है. प्रथम भागमें गणेश विष्णु, शिव, गायत्री, सूर्य, कार्तिकेय और देवी (अपूर्ण) इन स्तोत्रोंका संग्रह किया है और दूसरे भागमें लक्ष्मी, सरस्वती, नवग्रह, दत्तात्रेय, दस अवतार, गंगाप्रभृति पवित्र तीर्थे, पांडुरंग और वेदांत वगैरा एवं अनुभवसिद्ध स्तोत्रोंका अठारह पुराण तथा उपपुराण आदि ग्रंथोंसे चुन चुन कर संग्रह किया है.

इस चौदहवाँ संस्करणमें प्राचीन हस्तलिखित और अलभ्य ग्रंथोंके सहायसे अत्यंत रहस्यमय एवं तुरंत लाभप्रद सैंकडों स्तोत्रोंका समावेश किया है. अत एव हमें पूर्ण श्रद्धा है, कि यह संस्करण सर्वोपयोगी एवं सर्वप्रिय अवश्य होगा.

**नारायण राम आचार्य**

# बृहत्स्तोत्ररत्नाकरानुक्रमः ।
## (प्रथमो भागः)

| स्तोत्रनाम | पृ. |
|---|---|



| स्तोत्रनाम | पृ. |
|---|---|



### ४ गायत्रीस्तोत्राणि

—:०:—

गणेश - विष्णु - शिव - गायत्री - सूर्य - कार्तिकेय - देवी-
लक्ष्मी - सरस्वती - नवग्रह - दत्तात्रेय - अवतार -
राम - हनुमत् - कृष्ण - पाण्डुरङ्ग - गंगा -
वेदान्त - संकीर्ण - स्तोत्राणां -
समुच्चयात्मको

भागद्वयात्मको

# बृहत्स्तोत्ररत्नाकरः

## ( प्रथमो भागः )

## स्तोत्रसंख्या २११

# गणेशस्तोत्राणि ।



कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमाला-
खेलल्लोलंबकोलाहलमुखरितदिक्चक्रवालांतरालम् ।
प्रत्नं वेतंडरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वातांकूराजिहीर्षादरविवृतफणाशृंगभूषाभुजंगम् ॥

# बृहत्स्तोत्ररत्नाकरः

## मंगलाचरणम् ।

श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥ स जयति सिंधुरवदनो देवो यत्पादपंकजस्मरणम् । वासरमणिरिव तमसां राशिं नाशयति विघ्नानाम् ॥ १ ॥ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः । लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ २ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ ३ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ४ ॥ शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशांतये ॥ ५ ॥ व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् । पराशरात्मजं वंदे शुकतातं तपोनिधिम् ॥ ६ ॥ व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे । नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ७ ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान् बादरायणः ॥ ८ ॥

---

# अथ गणेशस्तोत्राणि

## १. गणेशन्यासः ।

श्रीगणेशाय नमः ॥ आचम्य प्राणायामं कृत्वा, दक्षिणहस्ते वक्रतुंडाय नमः । वामहस्ते शूर्पकर्णाय नमः । ओष्ठे विघ्नेशाय नमः । अधरोष्ठे चिंतामणये नमः । संपुटे गजाननाय नमः । दक्षिणपादे लंबोदराय नमः । वामपादे एकदंताय नमः ।

शिरसि एकदंताय नमः । चिबुके ब्रह्मणस्पतये नमः । दक्षिणनासिकायां विनायकाय नमः । वामनासिकायां ज्येष्ठराजाय नमः । दक्षिणनेत्रे विकटाय नमः । वामनेत्रे कपिलाय नमः । दक्षिणकर्णे धरणीधराय नमः । वामकर्णे आशापूरकाय नमः । नाभौ महोदराय नमः । हृदये धूम्रकेतवे नमः । ललाटे मयूरेशाय नमः । दक्षिणबाहौ स्वानंदवासकारकाय नमः । वामबाहौ सच्चित्सुखधाम्ने नमः ॥ इति गणेशन्यासः ॥

## २. गणेशकवचम् ।

श्रीगणेशाय नमः । गौर्युवाच । एषोऽतिचपलो दैत्यान्बाल्येऽपि नाशयत्यहो । अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम ॥ १ ॥ दैत्या नानाविधा दुष्टाः साधुदेवद्रुहः खलाः । अतोऽस्य कंठे किंचित्त्वं रक्षार्थं बद्धुमर्हसि ॥ २ ॥ मुनिरुवाच ॥ ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम् । द्वापारे तु गजाननं युगभुजं रक्तांगरागं विभुं तुर्ये तु द्विभुजं सितांगरुचिरं सर्वार्थदं सर्वदा ॥ ३ ॥ विनायकः शिखां पातु परमात्मा परात्परः । अतिसुंदरकायस्तु मस्तकं सुमहोत्कटः ॥ ४ ॥ ललाटं कश्यपः पातु भ्रूयुगं तु महोदरः । नयने भालचंद्रस्तु गजास्यस्त्वोष्ठपल्लवौ ॥ ५ ॥ जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः । वाचं विनायकः पातु दंतान् रक्षतु विघ्नहा ॥ ६ ॥ श्रवणौ पाशपाणिस्तु नासिकां चिंतितार्थदः । गणेशस्तु मुखं कंठं पातु देवो गणंजयः ॥ ७ ॥ स्कंधौ पातु गजस्कंधः स्तनौ विघ्नविनाशनः । हृदयं गणनाथस्तु हेरंबो जठरं महान् ॥ ८ ॥ धराधरः पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः । लिंगं

गुह्यं सदा पातु वक्रतुंडो महाबलः ॥ ९ ॥ गणक्रीडो जानुजंघे ऊरू मंगलमूर्तिमान् । एकदंतो महाबुद्धिः पादौ गुल्फौ सदाऽवतु ॥ १० ॥ क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः । अंगुलीश्च नखान्पातु पद्महस्तोऽरिनाशनः ॥ ११ ॥ सर्वांगानि मयूरेशो विश्वव्यापी सदाऽवतु । अनुक्तमपि यत्स्थानं धूम्रकेतुः सदाऽवतु ॥ १२ ॥ आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु । प्राच्यां रक्षतु बुद्धीश आग्नेय्यां सिद्धिदायकः ॥ १३ ॥ दक्षिणस्यामुमापुत्रो नैर्ऋत्यां तु गणेश्वरः । प्रतीच्यां विघ्नहर्ताऽव्याद्वायव्यां गजकर्णकः ॥ १४ ॥ कौबेर्यां निधिपः पायादीशान्यामीशनंदनः । दिवाऽव्यादेकदंतस्तु रात्रौ संध्यासु विघ्नहृत् ॥ १५ ॥ राक्षसासुरवेतालग्रहभूतपिशाचतः । पाशांकुशधरः पातु रजःसत्त्वतमःस्मृतिः ॥ १६ ॥ ज्ञानं धर्मं च लक्ष्मीं च लज्जां कीर्तिं तथा कुलम् । वपुर्धनं च धान्यं च गृहान्दाराः सुतान् सखीन् ॥ १७ ॥ सर्वायुधधरः पौत्रान् मयूरेशोऽवतात्सदा । कपिलोऽजाविकं पातु गजाश्वान्विकटोऽवतु ॥ १८ ॥ भूर्जपत्रे लिखित्वेदं यः कंठे धारयेत्सुधीः । न भयं जायते तस्य यक्षरक्षःपिशाचतः ॥ १९ ॥ त्रिसंध्यं जपते यस्तु वज्रसारतनुर्भवेत् । यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत् ॥ २० ॥ युद्धकाले पठेद्यस्तु विजयं प्राप्नुयाद्द्रुतम् । मारणोच्चाटनाकर्षस्तंभमोहनकर्मणि ॥ २१ ॥ सप्तवारं जपेदेतद्दिनानामेकविंशतिम् । तत्तत्फलमवाप्नोति साधको नात्र संशयः ॥ २२ ॥ एकविंशतिवारं च पठेत्तावद्दिनानि यः । कारागृहगतं सद्यो राज्ञा वध्यं च मोचयेत् ॥ २३ ॥ राजदर्शनवेलायां पठेदेतत्त्रिवारतः । स राजानं वशं नीत्वा प्रकृतीश्च सभां जयेत् ॥ २४ ॥ इदं गणेशकवचं कश्यपेन समीरितम् । मुद्गलाय च तेनाथ मांडव्याय

महर्षये ॥ २५ ॥ मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम् । न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ॥ २६ ॥ यस्यानेन कृता रक्षा न बाधाऽस्य भवेत्क्वचित् । राक्षसासुरवेतालदैत्यदानवसंभवा ॥ २७ ॥

इति श्रीगणेशपुराणे गणेशकवचं संपूर्णम् ॥

## ३. गणेशमानसपूजा ।

श्रीगणेशाय नमः ॥ श्रीसर्वप्रदाय नमः ॥ गृत्समद उवाच । विघ्नेशवीर्याणि विचित्रकाणि बंदीजनैर्मागधकैः स्मृतानि । श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मंगलकं कुरुष्व ॥ १ ॥ एवं मया प्रार्थितो विघ्नराजश्चित्तेन चोत्थाय बहिर्गणेशः । तं निर्गतं वीक्ष्य नमंति देवाः शंभ्वादयो योगिमुखास्तथाहम् ॥ २ ॥ शौचादिकं ते परिकल्पयामि हेरंब वै दंतविशुद्धिमेवम् । वस्त्रेण संप्रोक्ष्य मुखारविंदं देवं सभायां विनिवेशयामि ॥ ३ ॥ द्विजादि सर्वैरभिवंदितं च शुकादिभिर्मोदसुमोदकाद्यैः । संभाष्य चालोक्य समुत्थितं तं सुमंडपं कल्प्य निवेशयामि ॥ ४ ॥ रत्नैः सुदीप्तैः प्रतिबिंबितं तं पश्यामि चित्तेन विनायकं च । तत्रासनं रत्नसुवर्णयुक्तं संकल्प्य देवं विनिवेशयामि ॥ ५ ॥ सिद्ध्या च बुद्ध्या सह विघ्नराज पाद्यं कुरु प्रेमभरेण सर्वैः । सुवासितं नीरमथो गृहाण चित्तेन दत्तं च सुखोष्णभावम् ॥ ६ ॥ ततः सुवस्त्रेण गणेशमादौ संप्रोक्ष्य दूर्वादिभिरर्चयामि । चित्तेन भावप्रिय दीनबंधो मनो विलीनं कुरु ते पदाब्जे ॥ ७ ॥ कर्पूरकैलादिसुवासितं तु सुकल्पितं तोयमथो गृहाण । आचम्य तेनैव गजानन त्वं कृपाकटाक्षेण विलोकयाशु ॥ ८ ॥ प्रवालमुक्ताफलहाटकाद्यैः सुसंस्कृतं

ह्यंतरभावकेन । अनर्घ्यमर्घ्यं सफलं कुरुष्व मया प्रदत्तं गणराज ढुंढे ॥ ९ ॥ सौगंध्ययुक्तं मधुपर्कमाद्यं संकल्पितं भावयुतं गृहाण । पुनस्तथाचम्य विनायक त्वं भक्तांश्च भक्तेश सुरक्षयाशु ॥ १० ॥ सुवासितं चंपकजातिकाद्यैस्तैलं मया कल्पितमेव ढुंढे । गृहाण तेन प्रविमर्दयामि सर्वांगमेवं तव सेवनाय ॥ ११ ॥ ततः सुखोष्णेन जलेन चाहमनेकतीर्थाहृतकेन ढुंढे । चित्तेन शुद्धेन च स्नापयामि स्नानं मया दत्तमथो गृहाण ॥ १२ ॥ ततः पयःस्नानमचिंत्यभाव गृहाण तोयस्य तथा गणेश । पुनर्दधिस्नानमनामय त्वं चित्तेन दत्तं च जलस्य चैव ॥ १३ ॥ ततो घृतस्नानमपारवंद्य सुतीर्थजं विघ्नहर प्रसीद । गृहाण चित्तेन सुकल्पितं तु ततो मधुस्नानमथो जलस्य ॥ १४ ॥ सुशर्करायुक्तमथो गृहाण स्नानं मया कल्पितमेव ढुंढे । ततो जलस्नानमघापहंतृ विघ्नेश मायाभ्रमं वारयाशु ॥ १५ ॥ सुयक्षपंकं त्वमथो गृहाण स्नानं परेशाधिपते ततश्च । कौमंडलीसंभवजं कुरुष्व विशुद्धमेवं परिकल्पितं तु ॥ १६ ॥ ततस्तु सूक्तैर्मनसा गणेशं संपूज्य दूर्वादिभिरल्पभावैः । अपारकैर्मंडलभूतब्रह्मणस्पत्यकैस्तं ह्यभिषेचयामि ॥ १७ ॥ ततः सुवस्त्रेण तु प्रोञ्छनादि गृहाण चित्तेन मया सुकल्पितम् । ततो विशुद्धेन जलेन ढुंढे ह्याचांतमेवं कुरु विघ्नराज ॥ १८ ॥ अग्नौ विशुद्धे तु गृहाण वस्त्रे ह्यनर्घ्यमौल्ये मनसा मया ते । दत्ते परिच्छाद्य निजात्मदेहं ताभ्यां मयूरेश जनांश्च पालय ॥ १९ ॥ आचम्य विघ्नेश पुनस्तथैव चित्तेन दत्तं सुखमुत्तरीयम् । गृहाण भक्तप्रतिपालक त्वं नमोऽस्थ ते तारकसंयुतं तु ॥ २० ॥ यज्ञोपवीतं त्रिगुणस्वरूपं सौवर्णमेवं ह्यहिनाथभूतम् । भावेन दत्तं गणनाथ तत्त्वं गृहाण भक्तोद्धृतिकारणाय ॥ २१ ॥

आचांतमेवं मनसा प्रदत्तं कुरुष्व शुद्धेन जलेन ढुंढे । पुनश्च कौमंडलकेन पाहि विश्वं प्रभो खेलकरं सदा ते ॥ २२ ॥ उद्यद्दिनेशाभमथो गृहाण सिंदूरकं ते मनसा प्रदत्तम् । सर्वांगसंलेपनमादराद्वै कुरुष्व हेरंब च तेन पूर्णम् ॥ २३ ॥ सहस्रशीर्षं मनसा मया त्वं दत्तं किरीटं तु सुवर्णजं वै । अनेकरत्नैः खचितं गृहाण ब्रह्मेश ते मस्तकशोभनाय ॥ २४ ॥ विचित्ररत्नैः कनकेन ढुंढे युतानि चित्तेन मया परेश । दत्तानि नानापदकुंडलानि गृहाण शूर्पश्रुतिभूषणाय ॥ २५ ॥ शुंडाविभूषार्थमनंतखेलिन् सुवर्णजं कंचुकमागृहाण । रत्नैश्च युक्तं मनसा मया यद्दत्तं प्रभो तत्सफलं कुरुष्व ॥ २६ ॥ सुवर्णरत्नैश्च युतानि ढुंढे सदैकदंताभरणानि कल्प्य । गृहाण चूडाकृतये परेश दत्तानि दंतस्य च शोभनार्थम् ॥ २७ ॥ रत्नैः सुवर्णेन कृतानि तानि गृहाण चत्वारि मया प्रकल्प्य । संभूषय त्वं कटकानि नाथ चतुर्भुजेषु ह्यज विघ्नहारिन् ॥ २८ ॥ विचित्ररत्नैः खचितं सुवर्णसंभूतकं गृह्य मया प्रदत्तम् । तथांगुलीष्वंगुलिकं गणेश चित्तेन संशोभय तत्परेश ॥ २९ ॥ विचित्ररत्नैः खचितानि ढुंढे केयूरकाणि ह्यथ कल्पितानि । सुवर्णजानि प्रमथाधिनाथ गृहाण दत्तानि तु बाहुषु त्वम् ॥ ३० ॥ प्रवालमुक्ताफलरत्नजास्त्वं सुवर्णसूत्रैश्च गृहाण कंठे । चित्तेन दत्ता विविधाश्च माला ऊरूदरे शोभय विघ्नराज ॥ ३१ ॥ चंद्रं ललाटे गणनाथ पूर्णं वृद्धिक्षयाभ्यां तु विहीनमाद्यम् । संशोभय त्वं वरसंयुतं ते भक्तिप्रिय त्वं प्रकटीकुरुष्व ॥ ३२ ॥ चिंतामणिं चिंतितदं परेश हृद्देशगं ज्योतिर्मयं कुरुष्व । मणिं सदानंदसुखप्रदं च विघ्नेश दीनार्थद पालयस्व ॥ ३३ ॥ नाभौ फणीशं च सहस्रशीर्षं संवेष्टनेनैव गणाधिनाथ । भक्तं सुभूषं कुरु भूषणेन वर-

प्रदानं सफलं परेश ॥ ३४ ॥ कटीतटे रत्नसुवर्णयुक्तां कांचीं सुचित्तेन च धारयामि । विघ्नेश ज्योतिर्गणदीपनीं ते प्रसीद भक्तं कुरु मां दयाब्धे ॥ ३५ ॥ हेरंब ते रत्नसुवर्णयुक्ते सुनूपुरे मंजिरके तथैव । सुकिंकिणीनादयुते स्वबुद्ध्या सुपादयोः शोभय मे प्रदत्ते ॥ ३६ ॥ इत्यादिनानाविधभूषणानि तवेच्छया मानसकल्पितानि । संभूषयाम्येव त्वदंगकेषु विचित्रधातुप्रभवाणि ढुंढे ॥ ३७ ॥ सुचंदनं रक्तममोघवीर्यं सुघर्षितं ह्यष्टकगंधमुख्यैः । युक्तं मया कल्पितमेकदंत गृहाण ते त्वंगविलेपनार्थम् ॥ ३८ ॥ लिप्तेषु वैचित्र्यमथाष्टगंधैरंगेषु तेऽहं प्रकरोमि चित्रम् । प्रसीद चित्तेन विनायक त्वं ततः सुरक्तं रविमेव भाले ॥ ३९ ॥ घृतेन वै कुंकुमकेन रक्तान् सुतंदुलांस्ते परिकल्पयामि । भाले गणाध्यक्ष गृहाण पाहि भक्तान्सुभक्तिप्रिय दीनबंधो ॥ ४० ॥ गृहाण भो चंपकमालतीनि जलपंकजानि स्थलपंकजानि । चित्तेन दत्तानि च मल्लिकादिपुष्पाणि नानाविधवृक्षजानि ॥ ४१ ॥ पुष्पोपरि त्वं मनसा गृहाण हेरंब मंदारशमीदलानि । मया सुचित्तेन च कल्पितानि ह्यपारकाणि प्रणवाकृते तु ॥ ४२ ॥ दूर्वांकुरान्वै मनसा प्रदत्तांस्त्रिपंचपत्रैर्युतकार्द्रस्निग्धान् । गृहाण विघ्नेश्वर संख्यया त्वं हीनांश्च सर्वोपरि वक्रतुंड ॥ ४३ ॥ दशांगभूतं मनसा मया ते धूपं प्रदत्तं गणराज ढुंढे । गृहाण सौरभ्यकरं परेश सिद्ध्या च बुद्ध्या सह भक्तपाल ॥ ४४ ॥ दीपं सुवर्त्या युतमादरात्ते दत्तं मया मानसकं गणेश । गृहाण नानाविधजं घृतादितैलादिसंभूतममोघदृष्टे ॥ ४५ ॥ भोज्यं च लेह्यं गणराज पेयं चोष्यं च नानाविधषड्रसाढ्यम् । गृहाण नैवेद्यमथो मया ते सुकल्पितं पुष्टिपते महात्मन् ॥ ४६ ॥ सुवासितं भोजनमध्यभागे जलं मया

दत्तमथो गृहाण । कमंडलुस्थं मनसा गणेश पिबस्व विश्वादिक-तृप्तिकारिन् ॥ ४७ ॥ इतः करोद्वर्तनकं गृहाण सौगंध्ययुक्तं मुखमार्जनाय । सुवासितेनैव सुतीर्थजेन सुकल्पितं नाथ गृहाण ढुंढे ॥ ४८ ॥ पुनस्तथाचम्य सुवासितं च दत्तं मया तीर्थजलं पिबस्व । प्रकल्प्य विघ्नेश ततः परं ते संप्रोञ्छनं हस्तमुखे करोमि ॥ ४९ ॥ द्राक्षादिरंभाफलचूतकानि खार्जूरकार्कंधुकदाडिमानि । सुस्वादयुक्तानि मया प्रकल्प्य गृहाण दत्तानि फलानि ढुंढे ॥ ५० ॥ पुनर्जलेनैव करादिकं ते संक्षालयेऽहं मनसा गणेश । सुवासितं तोयमथो पिबस्व मया प्रदत्तं मनसा परेश ॥ ५१ ॥ अष्टांगयुक्तं गणनाथ दत्तं तांबूलकं ते मनसा मया वै । गृहाण विघ्नेश्वर भावयुक्तं सदा सकृत्तुंडविशोधनार्थम् ॥ ५२ ॥ ततो मया कल्पितके गणेश महासने रत्नसुवर्णयुक्ते । मंदारकूर्पासकयुक्तवस्त्रैरनर्घ्य-संछादितके प्रसीद ॥ ५३ ॥ ततस्त्वदीयावरणं परेश संपूजयेऽहं मनसा यथावत् । नानोपचारैः परमप्रियैस्तु त्वत्प्रीति-कामार्थमनाथबंधो ॥५४॥ गृहाण लंबोदर दक्षिणां ते ह्यसंख्यभूतां मनसा प्रदत्ताम् । सौवर्णमुद्रादिकमुख्यभावां पाहि प्रभो विश्व-मिदं गणेश ॥ ५५ ॥ राजोपचारान्विविधान् गृहाण हस्त्यश्व-छत्रादिकमादराद्वै । चित्तेन दत्तान् गणनाथ ढुंढे ह्यपारसंख्यान् स्थिरजंगमांस्ते ॥ ५६ ॥ दानाय नानाविधरूपकांस्ते गृहाण दत्ता-न्मनसा मया वै । पदार्थभूतान् स्थिरजंगमांश्च हेरंब मां तारय मोहभावात् ॥ ५७ ॥ मंदारपुष्पाणि शमीदलानि दूर्वांकुरांस्ते मनसा ददामि । हेरंब लंबोदर दीनपाल गृहाण भक्तं कुरु मां पदे ते ॥ ५८ ॥ ततो हरिद्रामबिरं गुलालं सिंदूरकं ते परि-कल्पयामि । सुवासितं वस्तु सुवासभूतैर्गृहाण ब्रह्मेश्वर शोभ-

नार्थम् ॥ ५९ ॥ ततः शुकाद्याः शिवविष्णुमुख्या इंद्रादयः शेषमुखास्तथान्ये । मुनींद्रकाः सेवकभावयुक्ताः सभासनस्थं प्रणमंति ढुंढिम् ॥ ६० ॥ वामांगके शक्तियुता गणेशं सिद्धिस्तु नानाविधसिद्धिभिस्तम् । अत्यंतभावेन सुसेवते तु मायास्वरूपा परमार्थभूता ॥ ६१ ॥ गणेश्वरं दक्षिणभागसंस्था बुद्धिः कलाभिश्च सुबोधिकाभिः । विद्याभिरेवं भजते परेश मायासुसांख्यप्रदचित्तरूपाः ॥ ६२ ॥ प्रमोदमोदादयः पृष्ठभागे गणेश्वरं भावयुता भजंते । भक्तेश्वरा मुद्गलशंभुमुख्याः शुकादयस्तं स्म पुरो भजंते ॥ ६३ ॥ गंधर्वमुख्या मधुरं जगुश्च गणेशगीतं विविधस्वरूपम् । नृत्यं कलायुक्तमथो पुरस्ताच्चक्रुस्तथा ह्यप्सरसो विचित्रम् ॥ ६४ ॥ इत्यादिनानाविधभावयुक्तैः संसेवितं विघ्नपतिं भजामि । चित्तेन ध्यात्वा तु निरंजनं वै करोमि नानाविधदीपयुक्तम् ॥ ६५ ॥ चतुर्भुजं पाशधरं गणेशं तथांकुशं दंतयुतं तमेवम् । त्रिनेत्रयुक्तं त्वभयंकरं तं महोदरं चैकरदं गजास्यम् ॥ ६६ ॥ सर्पोपवीतं गजकर्णधारं विभूतिभिः सेवितपादपद्मम् । ध्याये गणेशं विविधप्रकारैः सुपूजितं शक्तियुतं परेशम् ॥ ६७ ॥ ततो जपं वै मनसा करोमि स्वमूलमंत्रस्य विधानयुक्तम् । असंख्यभूतं गणराजहस्ते समर्पयाम्येव गृहाण ढुंढे ॥ ६८ ॥ आरार्तिकां कर्पुरकादिभूतामपारदीपां प्रकरोमि पूर्णाम् । चित्तेन लंबोदर तां गृहाण ह्यज्ञानध्वांताघहरां निजानाम् ॥ ६९ ॥ वेदेषु वैघ्नेश्वरकैः सुमंत्रैः सुमंत्रितं पुष्पदलं प्रभूतम् । गृहाण चित्तेन मया प्रदत्तमपारवृत्त्या त्वथ मंत्रपुष्पम् ॥ ७० ॥ अपारवृत्त्या स्तुतिसेकदंत गृहाण चित्तेन कृतां गणेश । युक्तां श्रुतिस्मार्तभवैः पुराणैः सर्वैः परेशाधिपते मया ते ॥ ७१ ॥ प्रदक्षिणा मानसकल्पितास्ता गृहाण लंबोदर

भावयुक्ताः । संख्याविहीना विविधस्वरूपा भक्तान्सदा रक्ष भवार्णवाद्वै ॥ ७२ ॥ नतिं ततो विघ्नपते गृहाण साष्टांगकाद्यां विविधस्वरूपाम् । संख्याविहीनां मनसा कृतां ते सिद्ध्या च बुद्ध्या परिपालयाशु ॥ ७३ ॥ न्यूनातिरिक्तं तु मया कृतं चेत्तदर्थमंते मनसा गृहाण । दूर्वांकुरान् विघ्नपते प्रदत्तान् संपूर्णमेवं कुरु पूजनं मे ॥ ७४ ॥ क्षमस्व विघ्नाधिपते मदीयान् सदापराधान् विविधस्वरूपान् । भक्तिं मदीयां सफलां कुरुष्व संप्रार्थयेऽहं मनसा गणेश ॥ ७५ ॥ ततः प्रसन्नेन गजाननेन दत्तं प्रसादं शिरसाभिवंद्य । स्वमस्तके तं परिधारयामि चित्तेन विघ्नेश्वरमानतोऽस्मि ॥ ७६ ॥ उत्थाय विघ्नेश्वर एव तस्माद्गतस्ततस्त्वंतरधानशक्त्या । शिवादयस्तं प्रणिपत्य सर्वे गताः सुचित्तेन च चिंतयामि ॥ ७७ ॥ सर्वान्नमस्कृत्य ततोऽहमेव भजामि चित्तेन गणाधिपं तम् । स्वस्थानमागत्य महानुभावैर्भक्तैर्गणेशस्य च खेलयामि ॥ ७८ ॥ एवं त्रिकालेषु गणाधिपं तं चित्तेन नित्यं परिपूजयामि । तेनैव तुष्टः प्रददातु भावं विश्वेश्वरो भक्तिमयं तु मह्यम् ॥ ७९ ॥ गणेशपादोदकपानकं च उच्छिष्टगंधस्य सुलेपनं तु । निर्माल्यसंधारणकं सुभोज्यं लंबोदरस्यास्तु हि भुक्तशेषम् ॥ ८० ॥ यं यं करोम्येव तदेव दीक्षा गणेश्वरस्यास्तु सदा गणेश । प्रसीद नित्यं तव पादभक्तं कुरुष्व मां ब्रह्मपते दयालो ॥ ८१ ॥ ततस्तु शय्यां परिकल्पयामि मंदारकूर्पासकवस्त्रयुक्ताम् । सुवासपुष्पादिभिरर्चितां ते गृहाण निद्रां कुरु विघ्नराज ॥ ८२ ॥ सिद्ध्या च बुद्ध्या सहितं गणेशं सुनिद्रितं वीक्ष्य तथाहमेव । गत्वा स्ववासं च करोमि निद्रां ध्यात्वा हृदि ब्रह्मपतिं तदीयः ॥ ८३ ॥ एतादृशं सौख्यममोघशक्ते देहि प्रभो मानसजं गणेश । मह्यं च तेनैव कृतार्थरूपो

भवामि भक्त्यमृतलालसोऽहम् ॥ ८४ ॥ गार्ग्य उवाच । एवं नित्यं महाराज गृत्समदो महायशाः । चकार मानसीं पूजां योगींद्राणां गुरुः स्वयम् ॥ ८५ ॥ य एतां मानसीं पूजां करिष्यति नरोत्तमः । पठिष्यति सदा सोऽपि गाणपत्यो भविष्यति ॥ ८६ ॥ श्रावयिष्यति यो मर्त्यः श्रोष्यते भावसंयुतः । स क्रमेण महीपाल ब्रह्मभूतो भविष्यति ॥ ८७ ॥ यद्यदिच्छति तत्तद्वै सफलं तस्य जायते । अंते स्वानंदगः सोऽपि योगिवंद्यो भविष्यति ॥ ८८ ॥ इति श्रीमदांत्ये मौद्गलपुराणे मानसपूजा समाप्ता ॥

## ४. गणेशबाह्यपूजा ।

श्रीगणेशाय नमः । ऐल उवाच । बाह्यपूजां वद विभो गृत्समदप्रकीर्तिताम् । येन मार्गेण विघ्नेशं भजिष्यसि निरंतरम् ॥ १ ॥ गार्ग्य उवाच । आदौ च मानसीं पूजां कृत्वा गृत्समदो मुनिः । बाह्यां चकार विधिवत्तां शृणुष्व सुखप्रदाम् ॥ २ ॥ हृदि ध्यात्वा गणेशानं परिवारादिसंयुतम् । नासिकारंध्रमार्गेण तं बाह्यांगं चकार ह ॥ ३ ॥ आदौ वैदिकमंत्रं स गणानां त्वेति संपठन् । पश्चाच्छ्लोकं समुच्चार्य पूजयामास विघ्नपम् ॥ ४ ॥ गृत्समद उवाच । चतुर्बाहुं त्रिनेत्रं च गजास्यं रक्तवर्णकम् । पाशांकुशादिसंयुक्तं मायायुक्तं प्रचिंतयेत् ॥ ५ ॥ आगच्छ ब्रह्मणां नाथ सुरासुरवरार्चित । सिद्धिबुद्ध्यादिसंयुक्त भक्तिग्रहणलालस ॥ ६ ॥ कृतार्थोऽहं कृतार्थोऽहं तवागमनतः प्रभो । विघ्नेशानुगृहीतोऽहं सफलो मे भवोऽभवत् ॥ ७ ॥ रत्नसिंहासनं स्वामिन् गृहाण गणनायक । तत्रोपविश्य विघ्नेश रक्ष भक्तान्विशेषतः ॥ ८ ॥ सुवासिताभिरद्भिश्च पादप्रक्षालनं प्रभो । शीतोष्णांभः करोमि ते गृहाण पाद्यमुत्तमम् ॥ ९ ॥ सर्वतीर्थाहृतं तोयं सुवासितं सुवस्तुभिः ।

आचमनं च तेनैव कुरुष्व गणनायक ॥ १० ॥ रत्नप्रवाल-मुक्ताद्यैरनर्घ्यैः संस्कृतं प्रभो । अर्घ्यं गृहाण हेरंब द्विरदानन तोषकम् ॥ ११ ॥ दधिमधुघृतैर्युक्तं मधुपर्कं गजानन । गृहाण भावसंयुक्तं मया दत्तं नमोऽस्तु ते ॥ १२ ॥ पाद्ये च मधुपर्के च स्नाने वस्त्रोपधारणे । उपवीते भोजनांते पुनराचमनं कुरु ॥ १३ ॥ चंपकाद्यैर्गणाध्यक्ष वासितं तैलमुत्तमम् । अभ्यंगं कुरु सर्वेश लंबोदर नमोऽस्तु ते ॥ १४ ॥ यक्षकर्दमकाद्यैश्च विघ्नेश भक्त-वत्सल । उद्वर्तनं कुरुष्व त्वं मया दत्तैर्महाप्रभो ॥ १५ ॥ नाना-तीर्थजलैर्ढुंढे सुखोष्णभावरूपकैः । कमंडलूद्भवैः स्नानं कुरु ढुंढे समर्पितैः ॥ १६ ॥ कामधेनुसमुद्भूतं पयः परमपावनम् । तेन स्नानं कुरुष्व त्वं हेरंब परमार्थवित् ॥ १७ ॥ पंचामृतानां मध्ये तु जलैः स्नानं पुनः पुनः । कुरु त्वं सर्वतीर्थेभ्यो गङ्गादिभ्यः समा-हृतैः ॥ १८ ॥ दधि धेनुपयोद्भूतं मलापहरणं परम् । गृहाण स्नानकार्यार्थं विनायक दयानिधे ॥ १९ ॥ धेनुदुग्धोद्भवं ढुंढे घृतं संतोषकारकम् । महामलापघातार्थं तेन स्नानं कुरु प्रभो ॥ २० ॥ सारघं संस्कृतं पूर्णं मधु मधुरसोद्भवम् । गृहाण स्नानकार्यार्थं विनायक नमोऽस्तु ते ॥ २१ ॥ इक्षुदण्डसमुद्भूतां शर्करां मल-नाशिनीम् । गृहाण गणनाथ त्वं तया स्नानं समाचर ॥ २२ ॥ यक्षकर्दमकाद्यैश्च स्नानं कुरु गणेश्वर । अंत्यं मलहरं शुद्धं सर्व-सौगंध्यकारकम् ॥२३॥ ततो गंधाक्षतादींश्च दूर्वांकुरान् गजानन । समर्पयामि स्वल्पांस्त्वं गृहाण परमेश्वर ॥ २४ ॥ ब्रह्मणस्पत्य-सूक्तैश्च ह्येकविंशतिवारकैः । अभिषेकं करोमि ते गृहाण द्विर-दानन ॥ २५ ॥ तत आचमनं देव सुवासितजलेन च । कुरुष्व गणनाथ त्वं सर्वतीर्थभवेन वै ॥ २६ ॥ वस्त्रयुग्मं गृहाण त्वम-

नर्घ्यं रक्तवर्णकम् । लोकलज्जाहरं चैव विघ्ननाथ नमोऽस्तु ते ॥ २७ ॥ उत्तरीयं सुचित्रं वै नभस्तारांकितं यथा । गृहाण सर्व-सिद्धीश मया दत्तं सुभक्तितः ॥ २८ ॥ उपवीतं गणाध्यक्ष गृहाण च ततः परम् । त्रैगुण्यमयरूपं तु प्रणवग्रंथिबंधनम् ॥२९॥ ततः सिंदूरकं देव गृहाण गणनायक । अंगलेपनभावार्थं सदानंद-विवर्धनम् ॥ ३० ॥ नानाभूषणकानि त्वमंगेषु विविधेषु च । भासुरस्वर्णरत्नैश्च निर्मितानि गृहाण भो ॥ ३१ ॥ अष्टगंधसमा-युक्तं गंधं रक्तं गजानन । द्वादशांगेषु ते ढुंढे लेपयामि सुचित्र-वत् ॥ ३२ ॥ रक्तचंदनसंयुक्तानथवा कुंकुमैर्युतान् । अक्षतान् विघ्नराज त्वं गृहाण भालमंडले ॥ ३३ ॥ चंपकादिसुवृक्षेभ्यः संभूतानि गजानन । पुष्पाणि शमीमंदारदूर्वादीनि गृहाण च ॥ ३४ ॥ दशांगं गुग्गुलं धूपं सर्वसौरभकारकम् । गृहाण त्वं मया दत्तं विनायक महोदर ॥ ३५ ॥ नानाजातिभवं दीपं गृहाण गणनायक । अज्ञानमलजं दोषं हरंतं ज्योतिरूपकम् ॥ ३६ ॥ चतुर्विधान्नसंपन्नं मधुरं लड्डुकादिकम् । नैवेद्यं ते मया दत्तं भोजनं कुरु विघ्नप ॥ ३७ ॥ सुवासितं गृहाणेदं जलं तीर्थसमाहृतम् । भुक्तिमध्ये च पानार्थं देवदेवेश ते नमः ॥ ३८ ॥ भोजनांते करोद्वर्तं यक्षकर्दमकेन च । कुरुष्व त्वं गणाध्यक्ष पिब तोयं सुवासितम् ॥ ३९ ॥ दाडिमं खर्जुरं द्राक्षां रंभादीनि फलानि वै । गृहाण देवदेवेश नानामधुरकाणि तु ॥ ४० ॥ अष्टांगं देव तांबूलं गृहाण मुखवासनम् । असकृद्विघ्नराज त्वं मया दत्तं विशेषतः ॥ ४१ ॥ दक्षिणां कांचनाद्यां तु नानाधातुसमुद्भवाम् । रत्नाद्यैः संयुतां ढुंढे गृहाण सकलप्रिय ॥ ४२ ॥ राजोपचारकाद्यानि गृहाण गणनायक । दानानि तु विचित्राणि मया दत्तानि विघ्नप

॥ ४३ ॥ तत आभरणं तेऽहमर्पयामि विधानतः। विविधैरुपचारैश्च तेन तुष्टो भव प्रभो ॥ ४४ ॥ ततो दूर्वांकुरान् ढुंढे एकविंशतिसंख्यकान्। गृहाण न्यूनसिद्ध्यर्थं भक्तवात्सल्यकारणात् ॥ ४५ ॥ नानादीपसमायुक्तं नीराजनं गजानन । गृहाण भावसंयुक्तं सर्वाज्ञानादिनाशन ॥ ४६ ॥ गणानां त्वेति मंत्रस्य जपं साहस्रकं परम्। गृहाण गणनाथ त्वं सर्वसिद्धिप्रदो भव ॥४७॥ आर्तिक्यं च सुकर्पूरं नानादीपमयं प्रभो। गृहाण ज्योतिषां नाथ तथा नीराजयाम्यहम् ॥ ४८ ॥ पादयोस्ते तु चत्वारि नाभौ द्वे वदने प्रभो । एकं तु सप्तवारं वै सर्वांगेषु निरंजनम् ॥ ४९ ॥ चतुर्वेदभवैर्मंत्रैर्गाणिपत्यैर्गजानन। मंत्रितानि गृहाण त्वं पुष्पपत्राणि विघ्नप ॥ ५० ॥ पंचप्रकारकैः स्तोत्रैर्गाणपत्यैर्गणाधिप। स्तौमि त्वां तेन संतुष्टो भव भक्तिप्रदायक ॥ ५१ ॥ एकविंशतिसंख्यं वा त्रिसंख्यं वा गजानन। प्रादक्षिण्यं गृहाण त्वं ब्रह्मन् ब्रह्मेशभावन ॥ ५२ ॥ साष्टांगां प्रणतिं नाथ एकविंशतिसंमिताम्। हेरंब सर्वपूज्य त्वं गृहाण तु मया कृताम् ॥ ५३ ॥ न्यूनातिरिक्तभावार्थं किंचिद्दूर्वांकुरान्प्रभो । समर्पयामि तेन त्वं सांगां पूजां कुरुष्व ताम् ॥ ५४ ॥ त्वया दत्तं स्वहस्तेन निर्माल्यं चिंतयाम्यहम्। शिखायां धारयाम्येव सदा सर्वप्रदं च तत् ॥ ५५ ॥ अपराधानसंख्यातान् क्षमस्व गणनायक । भक्तं कुरु च मां ढुंढे तव पादप्रियं सदा ॥५६॥ त्वं माता त्वं पिता मे वै सुहृत्संबंधिकादयः। त्वमेव कुलदेवश्च सर्वं त्वं मे न संशयः ॥ ५७ ॥ जाग्रत्स्वप्नसुषुप्तिभिर्देहवाङ्मानसैः कृतम् । सांसर्गिकेण यत्कर्म गणेशाय समर्पये ॥ ५८ ॥ बाह्यं नानाविधं पापं महोग्रं तल्लयं व्रजेत्। गणेशपादतीर्थस्य मस्तके धारणात्किल ॥ ५९ ॥ पादोदकं गणेशस्य पीतं नरेण तत्क्षणात्। सर्वांतर्गतजं पापं नश्यति

गणनातिगम् ॥ ६० ॥ गणेशोच्छिष्टगंधं वै द्वादशांगेषु चर्चयेत् । गणेशतुल्यरूपः स दर्शनात्सर्वपापहा ॥ ६१ ॥ यदि गणेशपूजादौ गंधभस्मादिकं चरेत् । अथवोच्छिष्टगंधं तु नो चेत्तत्र विधिं चरेत् ॥ ६२ ॥ द्वादशांगेषु विघ्नेशं नाममंत्रेण चार्चयेत् । तेन सोऽपि गणेशेन समो भवति भूतले ॥ ६३ ॥ आदौ गणेश्वरं मूर्ध्नि ललाटे विघ्ननायकम् । दक्षिणे कर्णमूले तु वक्रतुंडं समर्चयेत् ॥६४॥ वामे कर्णस्य मूले वै चैकदंतं समर्चयेत् । कंठे लंबोदरं देवं हृदि चिंतामणिं तथा ॥ ६५ ॥ बाहौ दक्षिणके चैव हेरंबं वामबाहुके । विकटं नाभिदेशे तु विनायकं समर्चयेत् ॥ ६६ ॥ कुक्षौ दक्षिणगायां तु मयूरेशं समर्चयेत् । वामकुक्षौ गजास्यं वै पृष्ठे स्वानंदवासिनम् ॥ ६७ ॥ सर्वांगलेपनं शस्तं चित्रितं ह्यष्टगंधकैः । गाणेशानां विशेषेण सर्वभद्रस्य कारणात् ॥ ६८ ॥ ततोच्छिष्टं तु नैवेद्यं गणेशस्य भुनज्म्यहम् । भुक्तिमुक्तिप्रदं पूर्णं नानापापनिकृंतनम् ॥ ६९ ॥ गणेशस्मरणेनैव करोमि कालखंडनम् । गाणपत्यैश्च संवासः सदाऽस्तु मे गजानन ॥ ७० ॥ गार्ग्य उवाच ॥ एवं गृत्समदश्चैव चकार बाह्यपूजनम् । त्रिकालेषु महायोगी सदा भक्तिसमन्वितः ॥ ७१ ॥ तथा कुरु महीपाल गाणपत्यो भविष्यसि । यथा गृत्समदः साक्षात्तथा त्वमपि निश्चितम् ॥ ७२ ॥ इति श्रीमदांत्ये मौद्गल्यपुराणे गणेशबाह्यपूजा समाप्ता ॥

## ५. गणेशमहिम्नः स्तोत्रम् ।

श्रीगणेशाय नमः ॥ अनिर्वाच्यं रूपं स्तवननिकरो यत्र गलितस्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्यात्र महतः । यतो जातं विश्वं स्थितमपि सदा यत्र विलयः स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः ॥ १ ॥ गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधा रविं सौरा

विष्णुं प्रथमपुरुषं विष्णुभजकाः । वदंत्येकं शाक्ता जगदुदयमूलां परशिवां न जाने किं तस्मै नम इति परं ब्रह्म सकलम् ॥ २ ॥ तथेशं योगज्ञा गणपतिमिमं कर्म निखिलं समीमांसा वेदांतिन इति परं ब्रह्म सकलम् । अजां सांख्यो ब्रूते सकलगुणरूपां च सततं प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति ॥ ३ ॥ कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणिर्यथा धीर्यस्य स्यात्स च तदनुरूपो गणपतिः । महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवद्ध्वनिर्ज्योतिर्बिंदुर्गगनसदृशः किं च सदसत् ॥ ४ ॥ अनेकास्योऽपाराक्षिकरचरणोऽनंतहृदयस्तथा नानारूपो विविधवदनः श्रीगणपतिः । अनंताह्वः शक्त्या त्रिविधगुणकर्मैकसमये त्वसंख्यातानंताभिमतफलदोऽनेकविषये ॥ ५ ॥ न यस्यांतो मध्यो न च भवति चादिः सुमहतामलिप्तः कृत्वेत्थं सकलमपि खंवत् स च पृथक् । स्मृतः संस्मर्तॄणां सकलहृदयस्थः प्रियकरो नमस्तस्मै देवाय सकलसुरवंद्याय महते ॥६॥ गणेशाद्यं बीजं दहनवनितापल्लवयुतं मनुश्चैकार्णोऽयं प्रणवसहितोऽभीष्टफलदः । सबिंदुश्चांगाद्यां गणकऋषिछंदोऽस्य च निचृत् स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम् ॥ ७ ॥ गकारो हेरंबः सगुण इति पुंनिर्गुणमयो द्विधाऽप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः । स चेशश्चोत्पत्तिस्थितिलयकरोऽयं प्रथमको यतो भूतं भव्यं भवति पतिरीशो गणपतिः ॥ ८ ॥ गकारः कंठोर्ध्वं गजमुखसमो मर्त्यसदृशो णकारः कंठाधो जठरसदृशाकार इति च । अधोभावः कट्यां चरण इति हीशोऽस्य च तनुर्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवःसुवः ॥ ९ ॥ गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम् । गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतं न विज्ञातो नाम्नः सकलमहिमा

कीदृशविधः ॥ १० ॥ गणेशेत्याह्वं यः प्रवदति मुहुस्तस्य पुरतः
प्रपश्यंस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा । स्वरूपस्य ज्ञानं त्वमुक
इति नाम्नाऽस्य भवति प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना
॥ ११ ॥ गणेशो विश्वेऽस्मिन्स्थित इह च विश्वं गणपतौ गणेशो
यत्रास्ते धृतिमतिरमैश्वर्यमखिलम् । समुक्तं नामैकं गणपतिपदं
मंगलमयं तदेकास्ये दृष्टे सकलविबुधास्येक्षणसमम् ॥ १२ ॥ बहु-
क्लेशैर्व्याप्तः स्मृत उत गणेशे च हृदये क्षणात्क्लेशान्मुक्तो भवति
सहसा त्वभ्रचयवत् । वने विद्यारंभे युधि रिपुभये कुत्र गमने
प्रवेशे प्राणांते गणपतिपदं चाशु विशति ॥ १३ ॥ गणाध्यक्षो
ज्येष्ठः कपिल अपरो मंगलनिधिर्दयालुर्हेरंबो वरद इति चिंतामणि-
रजः । वरानीशो ढुंढिर्गजवदननामा शिवसुतो मयूरेशो गौरी-
तनय इति नामानि पठति ॥ १४ ॥ महेशोऽयं विष्णुः सकवि-
रविरिंदुः कमलजः क्षितिस्तोयं वह्निः श्वसन इति खं त्वद्रिरुदधिः ।
कुजस्तारः शुक्रो गुरुरुडुबुधोऽगुश्च धनदो यमः पाशी काव्यः
शनिरखिलरूपो गणपतिः ॥ १५ ॥ मुखं वह्निः पादौ हरिरपि
विधाता प्रजननं रविर्नेत्रे चंद्रो हृदयमपि कामोऽस्य मदनः ।
करौ शक्रः कट्यामवनिरुदरं भाति दशनं गणेशस्यासन्वै क्रतुमय-
वपुश्चैव सकलम् ॥ १६ ॥ अनर्घ्यालंकारैररुणवसनैर्भूषिततनुः
करींद्रास्यः सिंहासनमुपगतो भाति बुधराट् । स्मितास्यात्तन्मध्येऽप्यु-
दितरविबिंबोपमरुचिः स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा
॥ १७ ॥ समंतात्तस्यासन् प्रवरमुनिसिद्धाः सुरगणाः प्रशंसंतीत्यग्रे
विविधनुतिभिः सांजलिपुटाः । बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्त-
निकरैर्गणक्रीडामोदप्रमदविकटाद्यैः सहचरैः ॥ १८ ॥ वशित्वाद्यष्टा-
ष्टादशदिगखिलाल्लोलमनुवाग्घृतिः पादूः खड्गोंजनरसबलाः सिद्धय

इमाः। सदा पृष्ठे तिष्ठंत्यनिमिषदृशस्तन्मुखलया गणेशं सेवंतेऽप्यतिनिकटसूपायनकराः ॥ १९ ॥ मृगांकास्या रंभाप्रभृतिगणिका यस्य पुरतः सुसंगीतं कुर्वंत्यपि कुतुकगंधर्वसहिताः। मुदः पारो नात्रेत्यनुपमपदे दौर्विगलिता स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम् ॥ २० ॥ हरेणायं ध्यातस्त्रिपुरमथने चासुरवधे गणेशः पार्वत्या बलिविजयकालेऽपि हरिणा। विधात्रा संसृष्टावुरगपतिना क्षोणिधरणे नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा ॥ २१ ॥ अयं सुप्रासादे सुर इव निजानंदभुवने महान् श्रीमानाद्यो लघुतरगृहे रंकसदृशः। शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे स्थितो भूत्वोमांके शिशुगणपतिर्लालनपरः ॥ २२ ॥ अमुष्मिन्संतुष्टे गजवदन एवापि विबुधे ततस्ते संतुष्टास्त्रिभुवनगताः स्युर्बुधगणाः। दयालुर्हेरंबो न च भवति यस्मिंश्च पुरुषे वृथा सर्वं तस्य प्रजननमतः सांद्रतमसि ॥ २३ ॥ वरेण्यो भ्रूशुंडिर्भृगुगुरुकुजा मुद्गलमुखा ह्यपारास्तद्भक्ता जपहवनपूजास्तुतिपराः। गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः ॥ २४ ॥ मृदः काश्चिद्धातोश्छदविलिखिता वापि दृषदः स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन सहसा। अशुद्धोऽद्धा द्रष्टा प्रवदति तदाह्वां गणपते श्रुता शुद्धो मर्त्यो भवति दुरिताद्विस्मय इति ॥ २५ ॥ बहिर्द्वारस्योर्ध्वं गजवदनवर्ष्मेंधनमयं प्रशस्तं वा कृत्वा विविधकुशलैस्तत्र निहतम्। प्रभावात्तन्मूर्त्या भवति सदनं मंगलमयं विलोक्यानंदस्तां भवति जगतो विस्मय इति ॥ २६ ॥ सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये मृदो मूर्तिं कृत्वा गणपतितिथौ ढुंढिसदृशीम्। समर्चंत्युत्साहः प्रभवति महान् सर्वसदने विलोक्यानंदस्तां प्रभवति नृणां विस्मय इति ॥ २७ ॥ तथा ह्येकः श्लोको

वरयति महिम्नो गणपतेः कथं स श्लोकेऽस्मिन् स्तुत इति भवेत्सं-
प्रपतिते। स्मृतं नामास्यैकं सकृदिदमनंताह्वयसमं यतो यस्यैकस्य
स्तवनसदृशं नान्यदपरम् ॥ २८ ॥ गजवदन विभो यद्वर्णितं वैभवं
ते त्विह जनुषि ममेत्थं चारु तद्दर्शयाशु। त्वमसि च करुणायाः
सागरः कृत्स्नदाताप्यति तव भृतकोऽहं सर्वदा चिंतकोऽस्मि ॥ २९ ॥
सुस्तोत्रं प्रपठतु नित्यमेतदेवं स्वानंदं प्रति गमनेऽप्ययं सुमार्गः।
संचिन्त्यं स्वमनसि तत्पदारविन्दं स्थाप्याग्रे स्तवनफलं नतीः करिष्ये
॥ ३० ॥ गणेशदेवस्य माहात्म्यमेतद् यः श्रावयेद्वापि पठेच्च तस्य।
क्लेशा लयं यांति लभेच्च शीघ्रं स्त्रीपुत्रविद्यार्थगृहं च मुक्तिम् ॥ ३१ ॥
इति श्रीपुष्पदंतविरचितं श्रीगणेशमहिम्नः स्तोत्रं संपूर्णम् ॥

## ६. गणेशाष्टोत्तरशतनामस्तोत्रम्।

श्रीगणेशाय नमः॥ यम उवाच। गणेश हेरंब गजाननेति महोदर
स्वानुभवप्रकाशिन्। वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदंतमेवं त्यजत
प्रभीताः ॥ १ ॥ अनेकविघ्नांतक वक्रतुंड स्वसंज्ञवासिंश्च चतुर्भुजेति।
कवीश देवांतकनाशकारिन् वदंतमेवं त्यजत प्रभीताः ॥ २ ॥
महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र। परेश पृथ्वीधर
एकदंत वदंत० ॥ ३ ॥ प्रमोद मोदेति नरांतकारे षडूर्मिहंतर्गजकर्ण
ढुंढे। द्वन्द्वारिसिन्धो स्थिरभावकारिन् वदंत० ॥ ४ ॥ विनायक
ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र। अनादिपूज्याऽऽखुग
सर्वपूज्य वदंत० ॥ ५ ॥ विद्येज्य लंबोदर धूम्रवर्ण मयूरपालेति
मयूरवाहिन्। सुरासुरैः सेवितपादपद्म वदंत० ॥ ६ ॥ वरिन्महा-
खुध्वज शूर्पकर्ण शिवाज सिंहस्थ अनंतवाह। दितौज विघ्नेश्वर
शेषनाभे वदंत० ॥ ७ ॥ अणोरणीयो महतो महीयो रवेर्ज योगे-

शज ज्येष्ठराज । निधीश मंत्रेश च शेषपुत्र वदंत० ॥ ८ ॥ वरप्रदातरदितेश्च सूनो परात्परज्ञानद तारवक्र । गुहाग्रज ब्रह्मप पार्श्वपुत्र वदंत० ॥९॥ सिन्धोश्च शत्रो परशुप्रपाणे शमीशपुष्पप्रिय विघ्नहारिन् । दूर्वाभरैरर्चित देवदेव वदंत० ॥ १० ॥ धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशांतिदातः । अमेयमायामितविक्रमेति वदंत० ॥ ११ ॥ द्विधाचतुर्थीप्रिय कश्यपाच्च धनप्रद ज्ञानपदप्रकाश । चिन्तामणे चित्तविहारकारिन् वदंत० ॥ १२ ॥ यमस्य शत्रो अभिमानशत्रो विधेर्जहंतः कपिलस्य सूनो । विदेह स्वानंद अयोगयोग वदंत० ॥ १३ ॥ गणस्य शत्रो कमलस्य शत्रो समस्तभावज्ञ च भालचंद्र । अनादिमध्यांतमयप्रचारिन् वदंत० ॥ १४ ॥ विभो जगद्रूप गणेश भूमन् पुष्टेःपते आखुगतेति बोधः । कर्तुश्च पातुश्च तु संहरेति वदंत० ॥ १५ ॥ इदमष्टोत्तरशतं नाम्नां तस्य पठंति ये । शृण्वंति तेषु वै भीताः कुरुध्वं मा प्रवेशनम् ॥ १६ ॥ भुक्तिमुक्तिप्रदं ढुंढेर्धनधान्यप्रवर्धनम् । ब्रह्मभूतकरं स्तोत्रं जपंतं नित्यमादरात् ॥ १७ ॥ यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः । धामानि तत्र संभीताः कुरुध्वं मा प्रवेशनम् ॥ १८ ॥ इति श्रीमदांत्ये मौद्गल्यपुराणे गणेशाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

## ७. संकष्टनाशनगणेशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारद उवाच । प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुंडं च एकदंतं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लंबोदरं पंचमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥ ३ ॥ नवमं भालचंद्रं च

दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो: ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् । संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ७ ॥ अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥ ८ ॥ इति श्रीनारदपुराणे संकष्टनाशनं गणेशस्तोत्रं संपूर्णम् ॥

## ८. गणेशाष्टकम् ।

श्रीगणेशाय नमः ॥ सर्वे ऊचुः । यतोऽनंतशक्तेरनंताश्च जीवा यतो निर्गुणादप्रमेया गुणास्ते । यतो भाति सर्वं त्रिधा भेदभिन्नं सदा तं गणेशं नमामो भजामः ॥ १ ॥ यतश्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो विश्वगोप्ता । तथेंद्रादयो देवसंघा मनुष्याः सदा तं गणेशं नमामो भजामः ॥ २ ॥ यतो वह्निभानू भवो भूर्जलं च यतः सागराश्चंद्रमा व्योम वायुः । यतः स्थावरा जंगमा वृक्षसंघाः सदा तं गणेशं नमामो भजामः ॥३॥ यतो दानवाः किन्नरा यक्षसंघा यतश्चारणा वारणाः श्वापदाश्च । यतः पक्षिकीटा यतो वीरुधश्च सदा तं गणेशं नमामो भजामः ॥४॥ यतो बुद्धिरज्ञाननाशो मुमुक्षोर्यतः संपदो भक्तसंतोषिकाः स्युः । यतो विघ्ननाशो यतः कार्यसिद्धिः सदा तं गणेशं नमामो भजामः ॥ ५ ॥ यतः पुत्रसंपद्यतो वांछितार्थो यतोऽभक्तविघ्नास्तथानेकरूपाः । यतः शोकमोहौ यतः काम एव सदा तं गणेशं नमामो भजामः ॥ ६ ॥ यतोऽनंतशक्तिः स शेषो बभूव धराधारणेऽनेकरूपे च शक्तः । यतोऽनेकधा स्वर्गलोका हि नाना सदा तं गणेशं नमामो भजामः ॥ ७ ॥ यतो

वेदवाचो विकुंठा मनोभिः सदा नेति नेतीति यत्ता गृणंति । परब्रह्मरूपं चिदानंदभूतं सदा तं गणेशं नमामो भजामः ॥ ८ ॥ श्रीगणेश उवाच । पुनरूचे गणाधीशः स्तोत्रमेतत्पठेन्नरः । त्रिसंध्यं त्रिदिनं तस्य सर्वं कार्यं भविष्यति ॥ ९ ॥ यो जपेदष्टदिवसं श्लोकाष्टकमिदं शुभम् । अष्टवारं चतुर्थ्यां तु सोऽष्टसिद्धीरवाप्नुयात् ॥ १० ॥ यः पठेन्मासमात्रं तु दशवारं दिने दिने । स मोचयेद्बंधगतं राजवध्यं न संशयः ॥ ११ ॥ विद्याकामो लभेद्विद्यां पुत्रार्थी पुत्रमाप्नुयात् । वांछितांल्लभते सर्वानेकविंशतिवारतः ॥ १२ ॥ यो जपेत्परया भक्त्या गजाननपरो नरः । एवमुक्त्वा ततो देवश्चांतर्धानं गतः प्रभुः ॥ १३ ॥ इति श्रीगणेशपुराणे उपासनाखंडे श्रीगणेशाष्टकं संपूर्णम् ॥

## ९. एकदंतस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मदासुरं सुशांतं वै दृष्ट्वा विष्णुमुखाः सुराः । भृग्वादयश्च मुनय एकदंतं समाययुः ॥ १ ॥ प्रणम्य तं प्रपूज्यादौ पुनस्तं नेमुरादरात् । तुष्टुवुर्हर्षसंयुक्ता एकदंतं गणेश्वरम् ॥२॥ देवर्षय ऊचुः ॥ सदात्मरूपं सकलादिभूतममायिनं सोऽहमचिंत्यबोधम् । अनादिमध्यांतविहीनमेकं तमेकदंतं शरणं व्रजामः ॥ ३ ॥ अनंतचिद्रूपमयं गणेशं ह्यभेदभेदादिविहीनमाद्यम् । हृदि प्रकाशस्य धुरं स्वधीस्थं तमेकदंतं शरणं व्रजामः ॥ ४ ॥ विश्वादिभूतं हृदि योगिनां वै प्रत्यक्षरूपेण विभांतमेकम् । सदा निरालंबसमाधिगम्यं तमेकदंतं शरणं० ॥ ५ ॥ स्वबिंबभावेन विलासयुक्तं बिंबस्वरूपा रचिता स्वमाया । तस्यां स्ववीर्यं प्रददाति यो वै तमेकदंतं० ॥ ६ ॥ त्वदीयवीर्येण समर्थभूता माया तया संरचितं च विश्वम् । नादा-

त्मकं ह्यात्मतया प्रतीतं तमेकदंतं श० ॥ ७ ॥ त्वदीयसत्ताधरमेकदंतं गणेशमेकं त्रयबोधितारम् । सेवंत आपुस्तमजं त्रिसंस्थास्तमेकदंतं० ॥ ८ ॥ ततस्त्वया प्रेरित एव नादस्तेनेदमेवं रचितं जगद्वै । आनंदरूपं समभावसंस्थं तमेक० ॥ ९ ॥ तदेव विश्वं कृपया तवैव संभूतमाद्यं तमसा विभातम् । अनेकरूपं ह्यजमेकभूतं तमेक० ॥ १० ॥ ततस्त्वया प्रेरितमेव तेन सृष्टं सुसूक्ष्मं जगदेकसंस्थम् । सत्त्वात्मकं श्वेतमनंतमाद्यं तमेक० ॥ ११ ॥ तदेव स्वप्नं तपसा गणेश संसिद्धिरूपं विविधं बभूव । सदेकरूपं कृपया तवापि तमेक० ॥ १२ ॥ संप्रेरितं तच्च त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् । तेनैव जाग्रन्मयमप्रमेयं तमेक० ॥ १३ ॥ जाग्रत्स्वरूपं रजसा विभातं विलोकितं तत्कृपया यदैव । तदा विभिन्नं भवत्येकरूपं तमेक० ॥ १४ ॥ एवं च सृष्ट्वा प्रकृतिस्वभावात्तदंतरे त्वं च विभासि नित्यम् । बुद्धिप्रदाता गणनाथ एकस्तमेक० ॥ १५ ॥ त्वदाज्ञया भान्ति ग्रहाश्च सर्वे नक्षत्ररूपाणि विभांति खे वै । आधारहीनानि त्वया धृतानि तमेक० ॥ १६ ॥ त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः । त्वदाज्ञया संहरको हरोऽपि तमेक० ॥ १७ ॥ यदाज्ञया भूर्जलमध्यसंस्था यदाज्ञयाऽऽपः प्रवहंति नद्यः । सीमां सदा रक्षति वै समुद्रस्तमेक० ॥ १८ ॥ यदाज्ञया देवगणो दिविस्थो ददाति वै कर्मफलानि नित्यम् । यदाज्ञया शैलगणोऽचलो वै तमेक० ॥ १९ ॥ यदाज्ञया शेष इलाधरो वै यदाज्ञया मोहप्रदश्च कामः । यदाज्ञया कालधरोऽर्यमा च तमेक० ॥ २० ॥ यदाज्ञया वाति विभाति वायुर्यदाज्ञयाऽग्निर्जठरादिसंस्थः । यदाज्ञया वै सचराचरं च तमेक० ॥ २१ ॥ सर्वांतरे संस्थितमेकगूढं यदाज्ञया सर्वमिदं विभाति ।

अनंतरूपं हृदि बोधकं वै तमेक० ॥ २२ ॥ यं योगिनो योगबलेन साध्यं कुर्वंति तं कः स्तवनेन स्तौति । अतः प्रणामेन सुसिद्धिदोऽस्तु तमेक० ॥ २३ ॥ गृत्समद उवाच । एवं स्तुत्वा च प्रह्लादो देवाः समुनयश्च वै । तूष्णींभावं प्रपद्येव ननृतुर्हर्षसंयुताः ॥ २४ ॥ स तानुवाच प्रीतात्मा ह्येकदंतः स्तवेन वै । जगाद तान्महाभागान् देवर्षीन्भक्तवत्सलः ॥ २५ ॥ एकदंत उवाच ॥ प्रसन्नोऽस्मि च स्तोत्रेण सुराः सर्षिगणाः किल । वृणुत वरदोऽहं वो दास्यामि मनसीप्सितम् ॥ २६ ॥ भवत्कृतं मदीयं वै स्तोत्रं प्रीतिप्रदं मम । भविष्यति न संदेहः सर्वसिद्धिप्रदायकम् ॥ २७ ॥ यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः । पुत्रपौत्रादिकं सर्वं लभते धनधान्यकम् ॥ २८ ॥ गजाश्वादिकमत्यंतं राज्यभोगं लभेद्ध्रुवम् । भुक्तिं मुक्तिं च योगं वै लभते शांतिदायकम् ॥ २९ ॥ मारणोच्चाटनादीनि राज्यबंधादिकं च न । पठतां शृण्वतां नृणां भवेच्च बंधहीनता ॥ ३० ॥ एकविंशतिवारं च श्लोकांश्चैवैकविंशतिम् । पठते नित्यमेवं च दिनानि त्वेकविंशतिम् ॥ ३१ ॥ न तस्य दुर्लभं किंचित्त्रिषु लोकेषु वै भवेत् । असाध्यं साधयेन्मर्त्यः सर्वत्र विजयी भवेत् ॥ ३२ ॥ नित्यं यः पठते स्तोत्रं ब्रह्मभूतः स वै नरः । तस्य दर्शनतः सर्वे देवाः पूता भवंति वै ॥ ३३ ॥ एवं तस्य वचः श्रुत्वा प्रहृष्टा देवतर्षयः । ऊचुः करपुटाः सर्वे भक्तियुक्ता गजाननम् ॥ ३४ ॥ इति एकदंतस्तोत्रं संपूर्णम् ॥

## १०. महागणपतिस्तोत्रम्[1] ।

श्रीगणेशाय नमः ॥ योगं योगविदां विधूतविविधव्यासंगशुद्धाशयप्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् । आनंदप्लवमान-

---

१ स्तोत्रस्यास्य टीका काव्यमालायाः प्रथमगुच्छे द्रष्टव्या ।

बोधमधुरामोदच्छटामेदुरं तं भूमानमुपास्महे परिणतं दंतावलास्यात्मना ॥ १ ॥ तारश्रीपरशक्तिकामवसुधारूपानुगं यं विदुस्तस्मै स्तात्प्रणतिर्गणाधिपतये यो रागिणाभ्यर्थ्यते । आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं स्वामिन्मे वशमानयेति सततं स्वाहादिभिः पूजितः ॥ २ ॥ कल्लोलांचलचुंबितांबुदतताविक्षुद्रवांभोनिधौ द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि । मूले कल्पतरोर्महामणिमये पीठेऽक्षरांभोरुहे षट्कोणाकलितत्रिकोणरचनासत्कर्णिकेऽमुं भजे ॥ ३ ॥ चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विजव्रीह्यग्रोत्पलपाशपंकजकरं शुंडाग्रजाग्रद्घटम् । आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद्भूषया माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ॥ ४ ॥ दानांभःपरिमेदुरप्रसृमरव्यालंबिरोलंबभृत्सिंदूरारुणगंडमंडलयुगव्याजात्प्रशस्तिद्वयम् । त्रैलोक्येष्टविधानवर्णसुभगं यः पद्मरागोपमं धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ॥ ५ ॥ भ्राम्यन्मंदरघूर्णनापरवशक्षीराब्धिवीचिच्छटासच्छायाश्चलचामरव्यतिकरश्रीगर्वसर्वंकषाः । दिक्कांताघनसारचंदनरसासाराः श्रयंतां मनः स्वच्छंदप्रसरप्रलिप्तवियतो हेरंबदंतत्विषः ॥ ६ ॥ मुक्ताजालकरंबितप्रविकसन्माणिक्यपुंजच्छटाकांताः कंबुकदंबचुंबितघनांभोजप्रवालोपमाः । ज्योत्स्नापूरतरंगमंथरतरत्संध्यावयस्याश्चिरं हेरंबस्य जयंति दंतकिरणाकीर्णाः शरीरत्विषः ॥ ७ ॥ शुंडाग्राकलितेन हेमकलशेनावर्जितेन क्षरन्नानारत्नचयेन साधकजनान्संभावयन् कोटिशः । दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भवत्कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥ ८ ॥ हेरंबं प्रणमामि यस्य पुरतः शांडिल्यमूले श्रिया बिभ्रत्यांबुरुहे समं मधुरिपुस्ते शंखचक्रे वहन् । न्यग्रोधस्य तले सहाद्रिसुतया शंभुस्तथा दक्षिणे बिभ्राणः

परशुं त्रिशूलमितया पाशाङ्कुशाभ्यां सह ॥ ९ ॥ पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले बिभ्रत्या सममैक्षवं धनुरिपून्पौष्पान्वहन्पंच च । वामे चक्रगदाधरः स भगवान्क्रोडः प्रियङ्गोस्तले हस्तोद्यच्छुकशालिमंजरिकया देव्या धरण्या सह ॥ १० ॥ षट्कोणाश्रिपु षट्सु षड् गजमुखाः पाशांकुशाभीवरान्बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्मपुंजत्विषः । आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः पश्चात् पार्श्वगतोऽस्य विघ्न इति यो यो विघ्नकर्तेति च ॥ ११ ॥ आमोदादिगणेश्वरप्रियतमास्तत्रैव नित्यं स्थिताः कांताश्लेषरसज्ञमंथरदृशः सिद्धिः समृद्धिस्ततः । कांतिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते साऽन्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ॥ १२ ॥ आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सितालोहितौ वर्षन्तौ वसुपार्श्वयोर्विलसतस्तौ शंखपद्मौ निधी । अंगान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रयास्तद्बाह्ये कुलिशादयः परिपतत्कालानलज्योतिषः ॥ १३ ॥ इत्थं विष्णुशिवादितत्त्वतनवे श्रीवक्रतुंडाय हुंकाराक्षिप्तसमस्तदैत्यपृतनाव्राताय दीप्तत्विषे । आनंदैकरसावबोधलहरीविध्वस्तसर्वोर्मये सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ॥ १४ ॥ सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटीकोटिव्याटीकमानद्युमणिसममणिश्रेणिभावेणिकानाम् । राजन्नीराजनश्रीसखचरणनखद्योतविद्योतमानः श्रेयः स्थेयः स देयान्मम विमलदृशो बंधुरं सिंधुरास्यः ॥ १५ ॥ एतेन प्रकटरहस्यमंत्रमालागर्भेण स्फुटतरसंविदा स्तवेन । यः स्तौति प्रचुरतरं महागणेशं तस्येयं भवति वशंवदा त्रिलोकी ॥ १६ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीराघवचैतन्यविरचितं महागणपतिस्तोत्रं समाप्तम् ॥

## ११. गणेशद्वादशनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ २ ॥ गणानामधिपश्चंडो गजवक्त्रस्त्रिलोचनः । प्रसन्नो भव मे नित्यं वरदातर्विनायक ॥ ३ ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ ४ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि गणेशस्य यः पठेत् ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी विपुलं धनम् । इष्टकामं तु कामार्थी धर्मार्थी मोक्षमक्षयम् ॥ ६ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ७ ॥ इति मुद्गलोक्तं श्रीगणेशद्वादशनामस्तोत्रं संपूर्णम् ॥

## १२. गणेशस्तवराजः ।

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥ गणेशस्य स्तवं वक्ष्ये कलौ झटिति सिद्धिदम् । न न्यासो न च संस्कारो न होमो न च तर्पणम् ॥ १ ॥ न मार्जनं च पञ्चाशत्सहस्रजपमात्रतः । सिद्ध्यत्यर्चनतः पञ्चशतब्राह्मणभोजनात् ॥ २ ॥ अस्य श्रीमहागणपतिस्तोत्रमंत्रस्य भगवान् सदाशिव ऋषिः, अनुष्टुप् छन्दः, श्रीमहागणपतिर्देवता, श्रीमहागणपतिप्रीत्यर्थे जपे विनियोगः ॥ विनायकैकभावनासमर्चनासमर्पितं प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम् । यदर्पितं सदर्पितं नवान्यधान्यनिर्मितं न कण्डितं न खण्डितं न खण्डमण्डनं कृतम् ॥ १ ॥ सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं निरञ्जनं च निर्गुणं निराकृति ह्यनिष्क्रियम् । सदात्मकं चिदात्मकं सुखात्मकं परं

पदं भजामि तं गजाननं स्वमायया त्तविग्रहम् ॥ २ ॥ गणाधिप त्वमष्टमूर्तिरीशसूनुरीश्वरस्त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः । त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरश्चराचरप्रचारहेतुरन्तराय-शान्तिकृत् ॥ ३ ॥ अनेकदं तमालनीलमेकदन्तसुन्दरं गजाननं नमोऽगजाननामृताब्धिचन्दिरम् । समस्तवेदवादसत्कलाकलाप-मन्दिरं महान्तरायकृत्तमोऽर्कमाश्रितोन्दुरुं परम् ॥ ४ ॥ सरत्नहेम-घण्टिकानिनादनूपुरस्वनैर्मृदङ्गतालनादभेदसाधनानुरूपतः । धिमि-द्धिमित्तथोङ्गथोङ्गथैयिथैयिशब्दतो विनायकः शशाङ्कशेखरः प्रहृष्य नृत्यति ॥ ५ ॥ सदा नमामि नायकैकनायकं कलाकलाप-कल्पनानिदानमादिपूरुषम् । गणेश्वरं गुणेश्वरं महेश्वरात्मसंभवं स्वपादपद्मसेविनामपारवैभवप्रदम् ॥ ६ ॥ भजे प्रचण्डतुन्दिलं सदन्दशूकभूषणं सनन्दनादिवन्दितं समस्तसिद्धसेवितम् । सुरा-सुरौघयोः सदा जयप्रदं भयप्रदं समस्तविघ्नघातिनं स्वभक्तपक्ष-पातिनम् ॥ ७ ॥ कराम्बुजातकङ्कणः पदाब्जकिङ्किणीगणो गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः । जगत्त्रयान्तरायशान्तिकारकोऽस्तु तारको भवार्णवस्थघोरदुर्गहा चिदेकविग्रहः ॥ ८ ॥ यो भक्तिप्रवण-श्चराचरगुरोः स्तोत्रं गणेशाष्टकं शुद्धः संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान् । तस्य श्रीरतुला स्वसिद्धिसहिता श्रीशारदा सर्वदा स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ॥९॥ इति श्रीरुद्रयामलोक्तो गणेशस्तवराजः संपूर्णः ॥

## १३. गणेशपंचरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मुदा करात्तमोदकं सदा विमुक्तिसाधकं कलाधरावतंसकं विलासिलोकरक्षकम् । अनायकैकनायकं विना-शितेभदैत्यकं नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १ ॥

नतेतरातिभीकरं नवोदितार्कभास्वरं नमत्सुरारिनिर्जरं नताधिकापद्दुद्धरम् । सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं महेश्वरं तमाश्रये परात्परं निरंतरम् ॥ २ ॥ समस्तलोकशंकरं निरस्तदैत्यकुंजरं दरेतरोदरं वरं वरेभवक्त्रमक्षरम् । कृपाकरं क्षमाकरं मुदाकरं यशस्करं मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३ ॥ अकिंचनार्तिमार्जनं चिरंतनोक्तिभाजनं पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् । प्रपञ्चनाशभीषणं धनं जयादिभूषणं कपोलदानवारणं भजे पुराणवारणम् ॥ ४ ॥ नितांतकांतदंतकांतिमंतकांतकात्मजमाचिंत्यरूपमंतहीनमंतरायकृंतनम् । हृदंतरे निरंतरं वसंतमेव योगिनां तमेकदंतमेव तं विचिन्तयामि संततम् ॥ ५ ॥ महागणेशपंचरत्नमादरेण योऽन्वहं प्रगायति प्रभातके हृदि स्मरन् गणेश्वरम् । अरोगतामदोषतां सुसाहितीं सुपुत्रतां समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥ ६ ॥ इति श्रीगणेशपंचरत्नस्तोत्रं संपूर्णम् ॥

## १४. गजाननस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जय देव गजानन प्रभो जय सर्वासुरगर्वभेदक । जय संकटपाशमोचन प्रणवाकार विनायकाऽव माम् ॥ १ ॥ तव देव जयन्ति मूर्तयः कलितागण्यसुपुण्यकीर्तयः । मनसा भजतां हतार्तयः कृतशीघ्राधिककामपूर्तयः ॥ २ ॥ तव रम्यकथास्वनादरः स नरो जन्मलयैकमन्दिरम् । न परत्र न चेह सौख्यभाङ् निजदुष्कर्मवशाद्विमोहभाक् ॥ ३ ॥ गजवक्त्र तवांघ्रिपङ्कजे ध्वजवज्राङ्कयुते सदा भजे । तव मूर्तिमहं परिष्वजे त्वयि हृन्मेऽस्तु सुमूषकध्वजे ॥ ४ ॥ त्वदृते हि गजानन प्रभो न हि भक्तौघसुखौघदायकः । सुदृढा मम भक्तिरस्तु ते चरणाब्जे विबुधेश विश्वपाः ॥ ५ ॥ फलपूरगदेक्षुकार्मुकैर्युत रुक्चक्रधराब्जपाशधृक् । भव

वारिजशालिमञ्जरीरदघ्नरत्नघटाढ्यशुण्ड माम् ॥ ६ ॥ करयुग्मसुहेमशृङ्खल द्विजराजाढ्यक तुन्दिलोदर । शशिसुप्रभ विद्यया युत स्तनभारानमितेड्य रक्ष माम् ॥ ७ ॥ शशिभास्करवीतिहोत्रदृक् शुभसिन्दूररुचे विनायक । द्विपवक्त्र महाहिभूषण त्रिदिवेशासुरवन्द्य पाहि माम् ॥ ८ ॥ सृणिपाशवरद्विजैर्युत द्विजराजार्धक मूषकध्वज । शुभलोहितचन्दनोक्षित श्रुतिवेद्याभयदायकाऽव माम् ॥ ९ ॥ स्मरणात्तव शंभुविध्यजेंद्विनशक्रादिसुराः कृतार्थताम् । गणपाऽऽपुरघौघभञ्जन द्विपराजाऽस्य सदैव पाहि माम् ॥ १० ॥ शरणं भगवान्विनायकः शरणं मे सततं च सिद्धिका । शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥ ११ ॥ गलद्दानगण्डं महाहस्तितुण्डं सुपर्वप्रचण्डं धृतार्धेन्दुखण्डम् । करास्फोटिताण्डं महाहस्तदण्डं हताढ्यारिमुण्डं भजे वक्रतुण्डम् ॥ १२ ॥ गणनाथ निबन्धसंस्तवं कृपयाङ्गीकुरु मत्कृतं ह्यमुम् । इदमेव सदा प्रदीयतां करुणा मय्यतुलाऽस्तु सर्वदा ॥ १३ ॥ इति गजाननस्तोत्रं संपूर्णम् ।

## १५. गणपतिस्तवः ।

श्रीगणेशाय नमः ॥ ऋषिरुवाच ॥ अजं निर्विकल्पं निराकारमेकं निरानन्दमानन्दमद्वैतपूर्णम् । परं निर्गुणं निर्विशेषं निरीहं परब्रह्मरूपं गणेशं भजेम ॥ १ ॥ गुणातीतमानं चिदानन्दरूपं चिदाभासकं सर्वगं ज्ञानगम्यम् । मुनिध्येयमाकाशरूपं परेशं परब्रह्मरूपं गणेशं भजेम ॥ २ ॥ जगत्कारणं कारणज्ञानरूपं सुरादिं सुखादिं गणेशं गुणेशम् । जगद्व्यापिनं विश्ववन्द्यं सुरेशं परब्रह्मरूपं गणेशं भजेम ॥ ३ ॥ रजोयोगतो ब्रह्मरूपं श्रुतिज्ञं सदा कार्यसक्तं हृदाऽचिन्त्य-

रूपम् । जगत्कारणं सर्वविद्यानिदानं परब्रह्मरूपं गणेशं नताः स्मः ॥ ४ ॥ सदा सत्ययोग्यं मुदा क्रीडमानं सुरारीन्हरंतं जगत्पालयंतम् । अनेकावतारं निजज्ञानहारं सदा विश्वरूपं गणेशं नमामः ॥ ५ ॥ तमोयोगिनं रुद्ररूपं त्रिनेत्रं जगद्धारकं तारकं ज्ञानहेतुम् । अनेकागमैः स्वं जनं बोधयन्तं सदा सर्वरूपं गणेशं नमामः ॥ ६ ॥ नमः स्तोमहारं जनाज्ञानहारं त्रयीवेदसारं परब्रह्मसारम् । मुनिज्ञानकारं विदूरे विकारं सदा ब्रह्मरूपं गणेशं नमामः ॥ ७ ॥ निजैरोषधीस्तर्पयन्तं कराद्यैः सुरौघान्कलाभिः सुधास्राविणीभिः । दिनेशांशुसंतापहारं द्विजेशं शशांकस्वरूपं गणेशं नमामः ॥ ८ ॥ प्रकाशस्वरूपं नमो वायुरूपं विकारादिहेतुं कलाधारभूतम् । अनेकक्रियानेकशक्तिस्वरूपं सदा शक्तिरूपं गणेशं नमामः ॥ ९ ॥ प्रधानस्वरूपं महत्तत्त्वरूपं धराचारिरूपं दिगीशादिरूपम् । असत्सत्स्वरूपं जगद्धेतुरूपं सदा विश्वरूपं गणेशं नताः स्मः ॥ १० ॥ त्वदीये मनः स्थापयेदंघ्रियुग्मे जनो विघ्नसंघातपीडां लभेत । लसत्सूर्यबिम्बे विशाले स्थितोऽयं जनो ध्वान्तपीडां कथं वा लभेत ॥ ११ ॥ वयं भ्रामिताः सर्वथाऽज्ञानयोगादलब्धास्तवांघ्रिं बहून्वर्षपूगान् । इदानीमवाप्तास्तवैव प्रसादात्प्रपन्नान्सदा पाहि विश्वंभराद्य ॥ १२ ॥ एवं स्तुतो गणेशस्तु संतुष्टोऽभून्महामुने । कृपया परयोपेतोऽभिधातुमुपचक्रमे ॥ १३ ॥ इति ऋषिप्रणीतो गणपतिस्तवः संपूर्णः ॥

## १६. गणेशभुजंगप्रयातम् ।

श्रीगणेशाय नमः ॥ रणत्क्षुद्रघंटानिनादाभिरामं चलत्तांडवोद्दंडवत्पद्मतालम् । लसत्तुंदिलाङ्गोपरिव्यालहारं गणाधीशमीशान-

सूनुं तमीडे ॥ १ ॥ ध्वनिध्वंसवीणालयोल्लासिवक्त्रं स्फुरच्छुंड-दंडोल्लसद्बीजपूरम् । गलद्दर्पसौगंध्यलोलालिमालं गणाधीशमीशा-नसूनुं तमीडे ॥ २ ॥ प्रकाशजपारक्तरत्नप्रसूनप्रवालप्रभातारुणज्यो-तिरेकम् । प्रलम्बोदरं वक्रतुंडैकदंतं गणाधीशमीशानसूनुं तमीडे ॥ ३ ॥ विचित्रस्फुरद्रत्नमालाकिरीटं किरीटोल्लसच्चन्द्ररेखाविभूषम् । विभूषैकभूषं भवध्वंसहेतुं गणाधीशमीशानसूनुं तमीडे ॥ ४ ॥ उद-ञ्चद्भुजावल्लरीदृश्यमूलोच्चलद्भ्रूलताविभ्रमभ्राजदक्षम् । मरुत्सुन्द-रीचामरैः सेव्यमानं गणाधीशमीशानसूनुं तमीडे ॥ ५ ॥ स्फुरन्नि-ष्ठुरालोलपिङ्गाक्षितारं कृपाकोमलोदारलीलावतारम् । कलाबिंदुगं गीयते योगिवर्यैर्गणाधीशमीशानसूनुं तमीडे ॥ ६ ॥ यमेकाक्षरं निर्मलं निर्विकल्पं गुणातीतमानन्दमाकारशून्यम् । परं पारमोंकार-माम्नायगर्भं वदन्ति प्रगल्भं पुराणं तमीडे ॥ ७ ॥ चिदानन्द-सांद्राय शान्ताय तुभ्यं नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् । नमोऽ-नन्तलीलाय कैवल्यभासे नमो विश्वबीज प्रसीदेशसूनो ॥ ८ ॥ इमं सुस्तवं प्रातरुत्थाय भक्त्या पठेद्यस्तु मर्त्यो लभेत्सर्वकामान् । गणेशप्रसादेन सिद्ध्यंति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने ॥ ९ ॥ इति श्रीगणेशभुजंगप्रयातस्तोत्रं संपूर्णम् ॥

## १७. गणेशशतनामार्चनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ काश्यां तु बहवो विघ्नाः काशीवासवियो-जकाः । तच्छांत्यर्थं ढुंढिराजः पूजनीयः प्रयत्नतः ॥ १ ॥ अष्टोत्तरशतैर्दिव्यैर्गणेशस्यैव नामभिः । कर्तव्यमतियत्नेन नवदूर्वा-ङ्कुरार्पणम् ॥ २ ॥ हिरण्मयतनुं शुद्धं सर्वार्तिहरमव्ययम् । वरदं गणपं ध्यात्वा पूजा कार्या प्रयत्नतः ॥ ३ ॥ ऋषिर्विघ्नेश इत्यादिनाम्नां सर्वेश्वरः शिवः । देवता विघ्नराजोऽत्र छन्दोऽनुष्टुप् शुभप्रदम् ॥ ४ ॥

सर्वप्रत्यूहशमनं फलं शक्तिः सुधात्मिका । कीलकं गणनाथस्य पूजा कार्येति कामदा ॥ ५ ॥ विघ्नेशो विश्ववदनो विश्वचक्षुर्जगत्पतिः । हिरण्यरूपः सर्वात्मा ज्ञानरूपो जगन्मयः ॥ ६ ॥ ऊर्ध्वरेता महाबाहुरमेयोऽमितविक्रमः । वेदवेद्यो महाकायो विद्यानिधिरनामयः ॥ ७ ॥ सर्वज्ञः सर्वगः शांतो गजास्यो विगतज्वरः । विश्वमूर्तिरमेयात्मा विश्वाधारः सनातनः ॥ ८ ॥ सामगानप्रियो मंत्री सत्त्वाधारः सुराधिपः । समस्तसाक्षिनिर्द्वन्द्वो निर्लिप्तोऽमोघविक्रमः ॥ ९ ॥ नियतो निर्मलः पुण्यः कामदः कांतिदः कविः । कामरूपी कामवेषो कमलाक्षः कलाधरः ॥ १० ॥ सुमुखः शर्मदः शुद्धो मूषकाधिपवाहनः । दीर्घतुंडधरः श्रीमाननंतो मोहवर्जितः ॥ ११ ॥ वक्रतुंडः शूर्पकर्णः पवनः पावनो वरः । योगीशो योगिवंद्यांघ्रिरुमासुनुरघापहः ॥ १२ ॥ एकदंतो महाग्रीवः शरण्यः सिद्धिसेवितः । सिद्धिदः करुणासिंधुर्भगवान् भव्यविग्रहः ॥ १३ ॥ विकटः कपिलो ढुंढिरुग्रो भीमो हरः शुभः । गणाध्यक्षो गणाराध्यो गणेशो गणनायकः ॥ १४ ॥ ज्योतिःस्वरूपो भूतात्मा धूम्रकेतुरनाकुलः । कुमारगुरुरानन्दो हेरम्बो वेदसंस्तुतः ॥ १५ ॥ नागोपवीती दुर्धर्षो बालदूर्वाङ्कुरप्रियः । भालचंद्रो विश्वधामा शिवपुत्रो विनायकः ॥ १६ ॥ लीलावलम्बितवपुः पूर्णः परमसुन्दरः । विघ्नान्धकारमार्तंडो विघ्नारण्यदवानलः ॥ १७ ॥ सिंदूरवदनो नित्यो विष्णुः प्रमथपूजितः । शरण्यदिव्यपादाब्जो भक्तमन्दारभूरुहः ॥ १८ ॥ रत्नसिंहासनासीनो मणिकुंडलमण्डितः । भक्तकल्याणदोऽमेयकल्याणगुणसंश्रयः ॥ १९ ॥ एतानि दिव्यनामानि गणेशस्य महात्मनः । पठनीयानि यत्नेन सर्वदा सर्वदेहिभिः ॥ २० ॥ नाम्नामेकैकमेतेषां सर्वसिद्धिप्रदा-

यकम् । सर्वविघ्नेशनाम्नां तु फलं वक्तुं न शक्यते ॥ २१ ॥ एकैकमेव तन्नाम दिव्यं जप्त्वा मुनीश्वराः । प्रत्यूहमात्ररहितास्तिष्ठन्ति शिवपूजकाः ॥ २२ ॥ दूर्वायुग्मानि संगृह्य नूतनान्यतियत्नतः । पूजनीयो गणाध्यक्षो नाम्नामेकैकसंख्यया ॥ २३ ॥ नभस्यशुक्लपक्षस्य चतुर्थ्यां विधिपूर्वकम् । वक्रतुंडेशकुंडे तु स्नानं कृत्वा प्रयत्नतः ॥ २४ ॥ वक्रतुंडेशमाराध्यं सर्वाभीष्टप्रदायकम् । ध्यायेदघहरं शुद्धं काञ्चनाभमनामयम् ॥ २५ ॥ ततः पूजा यथाशास्त्रं कृत्वा दूर्वाङ्कुरैर्नवैः । पूजा कार्या विशेषेण नामोच्चारणपूर्वकम् ॥ २६ ॥ ततश्च मोदकैर्दिव्यैः सुगन्धैर्घृतपाचितैः । नैवेद्यं कल्पयेदिष्टं गणेशाय शुभावहम् ॥ २७ ॥ अन्यैश्च परमान्नाद्यैर्भक्ष्यैर्भोज्यैर्मनोहरैः । तोषणीयः प्रयत्नेन वक्रतुंडो विनायकः ॥ २८ ॥ प्रदक्षिणनमस्कारा दिव्यतन्नामसंख्यया । कर्तव्या नियतं शुद्धैर्मौनव्रतपरायणैः ॥ २९ ॥ ततः संतर्प्य विधिवच्चैवान् ब्राह्मणसत्तमान् । पुनरभ्यर्च्य विघ्नेशमिमं मंत्रमुदीरयेत् ॥ ३० ॥ वक्रतुंड सुराराध्य सूर्यकोटिसमप्रभ । निर्विघ्नेनैव सततं काशीवासं प्रयच्छ मे ॥ ३१ ॥ इति संप्रार्थ्य विधिवत् पूजां कृत्वा पुनर्मुदा । नमस्कृत्वा प्रसाद्यैनं गच्छेत् ढुंढिविनायकम् ॥ ३२ ॥ ढुंढिराजार्चनं सम्यक् कर्तव्यं विधिपूर्वकम् । तत्रैव च विशेषेण पूजां कृत्वा ततः परम् ॥ ३३ ॥ पूजनीयाः प्रयत्नेन सर्वदा मोदकप्रियाः । शिवप्रीतिकरा नित्यं शुद्धाः पञ्च विनायकाः ॥ ३४ ॥ क्षिप्रसिद्धिप्रदं क्षिप्रगणेशं सुरवंदितम् । संपूज्य पूर्ववत्सम्यक् गच्छेदाशाविनायकम् ॥ ३५ ॥ आशाविनायकं सम्यक् पूजयित्वा ततः परम् । अर्कविघ्नेश्वरः सम्यक् पूजनीयः प्रयत्नतः ॥ ३६ ॥ पूर्ववत्पूजनीयः स्यात्ततः सिद्धिविनायकः । पूजनीयस्ततः सम्यक् चिन्तामणिविनायकः

॥ ३७ ॥ सेवाविनायकोऽप्येवं संपूज्यस्तदनन्तरम् । दुर्गाविनायकस्यापि पूजा कार्या ततः परम् ॥ ३८ ॥ एवं संपूज्य विधिवद्भक्तिश्रद्धासमन्वितैः । शैवाः शङ्करतत्त्वज्ञा भोजनीयाः प्रयत्नतः ॥ ३९ ॥ एवं संपूजिताः सम्यक् प्रीतास्ते गणनायकाः । काशीवासं प्रयच्छन्ति निर्विघ्नेनैव सादरम् ॥ ४० ॥ आज्येन कापिलेनैव सार्धलक्षत्रयाहुतीः । हुत्वैतन्नामभिः सम्यक् सर्वविद्याधिपो भवेत् ॥ ४१ ॥ एतानि दिव्यनामानि प्रतिवासरमादरात् । पठित्वा गणनाथस्य पूजा कार्या प्रयत्नतः ॥ ४२ ॥ यस्य कस्यापि संतुष्टो गणपः सर्वसिद्धिदः । अत एव सदा पूज्यो गणनाथो विचक्षणैः ॥ ४३ ॥ गणेशादपरो लोके विघ्नहर्ता न विद्यते । तस्मादन्वहमाराध्यो गणेशः सर्वसिद्धिदः ॥ ४४ ॥ काशीनिवाससिद्ध्यर्थं विष्णुना पूजितः पुरा । पुरा विघ्नेश्वरः सम्यक्पूजितो दण्डपाणिना ॥ ४५ ॥ कर्कोटकेन नागेन गणेशः पूजितः पुरा । शेषेण पूजितः पूर्वं गणेशः सिद्धिदायकः ॥ ४६ ॥ काशीयात्रार्थमुद्युक्तो विधिर्विघ्नकुलाकुलः । पूजयामास विघ्नेशं विधिवद्भक्तिपूर्वकम् ॥ ४७ ॥ सूर्येणाभ्यर्चितः पूर्वं चंद्रेणेंद्रेण च प्रिये । देवैरन्यैश्च विधिवत्पूजितो गणनायकः ॥ ४८ ॥ मर्त्यानाममराणां च मुनीनां वा वरानने । न सिद्ध्यन्त्येव कार्याणि गणेशाभ्यर्चनं विना ॥ ४९ ॥ इति श्रीशिवरहस्यान्तर्गतकाशीमाहात्म्ये हरगौरीसंवादे गणेशशतनामार्चनस्तोत्रं संपूर्णम् ॥

## १८. ढुंढिभुजंगप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ उमांगोद्भवं दंतिवक्त्रं गणेशं भुजे कङ्कणैः शोभितं धूम्रकेतुम् । गले हारमुक्तावलीशोभितं तं नमो ज्ञानरूपं

गणेशं नमस्ते ॥ १ ॥ गणेशैकदन्तं शुभं सर्वकार्ये स्मरन्मन्मुखं ज्ञानदं सर्वसिद्धिम् । मनश्चिन्तितं कार्यसिद्धिर्भवेत्तं नमो बुद्धि-कान्तं गणशं नमस्ते नमस्ते ॥ २ ॥ कुठारं धरन्तं कृतं विघ्नराजं चतुर्भिर्मुखैरेकदंतैकवर्णम् । इदं देवरूपं गणं सिद्धिनाथं नमो भालचन्द्रं गणेशं नमस्ते ॥ ३ ॥ शिरःसिन्दुरं कुङ्कुमं देहवर्णं शुभैभादिकं प्रीयते विघ्नराजम् । महासंकटच्छेदने धूम्रकेतुं नमो गौरिपुत्रं गणेशं नमस्ते ॥ ४ ॥ यथा पातकं छेदितुं विष्णुनाम तथा ध्यायतां शंकरं पापनाशम् । यथा पूजितं षण्मुखं शोकनाशं नमो विघ्ननाशं गणेशं नमस्ते ॥ ५ ॥ सदा सर्वदा ध्यायतामेकदंतं सदा पूजितं सिंदुरारक्तपुष्पैः । सदा चर्चितं चन्दनैः कुङ्कुमाक्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ६ ॥ नमो गौरिदेहमलोत्पन्न तुभ्यं नमो ज्ञानरूपं नमः सिद्धिपं तम् । नमो ध्यायतामर्चतां बुद्धिदं तं नमो गौर्यपत्यं गणेशं नमस्ते ॥ ७ ॥ भुजङ्गप्रयातं पठेद्यस्तु भक्त्या प्रभाते नरस्तन्मयैकाग्रचित्तः । क्षयं यान्ति विघ्ना दिशः शोभयन्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ८ ॥ इति श्रीढुंढिराजभुजंगप्रयातस्तोत्रं संपूर्णम् ॥

## १९. विघ्ननिवारकं गणपतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विघ्नेश विघ्नचयखण्डननामधेय श्रीशङ्करात्मज सुराधिपवन्द्यपाद । दुर्गामहाव्रतफलाखिलमङ्गलात्मन् विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ १ ॥ सत्पद्मरागमणिवर्णशरीरकान्तिः श्रीसिद्धिबुद्धिपरिचर्चितकुङ्कुमश्रीः । दक्षस्तने वलयितातिमनोज्ञ-शुण्डो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ २ ॥ पाशाङ्कुशा-ब्जपरशूंश्च दधच्चतुर्भिर्दोर्भिश्च शोणकुसुमस्त्रगुमांगजातः । सिन्दूर-शोभितललाटविधुप्रकाशो विघ्नं ममापहर सिद्धिविनायक त्वम्

॥ ३ ॥ कार्येषु विघ्नचयभीतविरञ्चिमुख्यैः सम्पूजितः सुरवरैरपि मोदकाद्यैः । सर्वेषु च प्रथममेव सुरेषु पूज्यो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ४ ॥ शीघ्राञ्चनस्खलनतुंखरवोर्ध्वकण्ठस्थूलेन्दुरुद्रगणहासितदेवसङ्घः । शूर्पश्रुतिश्च पृथुवर्तुलतुङ्गतुन्दो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ५ ॥ यज्ञोपवीतपदलंभितनागराजो मासादिपुण्यददृशीकृतऋक्षराजः । भक्ताभयप्रद दयालय विघ्नराज विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ६ ॥ सद्रत्नसारततिराजितसत्किरीटः कौसुम्भचारुवसनद्वय ऊर्जितश्रीः । सर्वत्रमङ्गलकरस्मरणप्रतापो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ७ ॥ देवान्तकाद्यसुरभीतसुरार्तिहर्ता विज्ञानबोधनवरेण तमोपहर्ता । आनन्दितत्रिभुवनेश कुमारबन्धो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ८ ॥ इति विघ्ननिवारकं गणपतिस्तोत्रं संपूर्णम् ॥

## २०. मयूरेश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सर्वे ऊचुः ॥ परब्रह्मरूपं चिदानंदरूपं परेशं गुणाब्धिं गुणेशम् । गुणातीतमीशं मयूरेशवंद्यं गणेशं नताः स्मो नताः स्मो नताः स्मः ॥ १ ॥ जगद्वंद्यमेकं पराकारमेकं गुणानां परं कारणं निर्विकल्पम् । जगत्पालकं हारकं तारकं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ २ ॥ महादेवसूनुं महादैत्यनाशं महापूरुषं सर्वदा विघ्ननाशम् । सदा भक्तपोषं परं ज्ञानकोशं मयूरेश० ॥३॥ अनादिं गुणादिं सुरादिं शिवाया महातोषदं सर्वदा सर्ववंद्यम् । सुरार्यंतकं भुक्तिमुक्तिप्रदं तं मयूरेश० ॥ ४ ॥ परं मायिनं मायिनामप्यगम्यं मुनिध्येयमाकाशकल्पं जनेशम् । असंख्यावतारं निजाज्ञाननाशं मयूरेश० ॥ ५ ॥ अनेकक्रियाकारकं श्रुत्यगम्यं त्रयीबोधितानेककर्मादिबीजम् । क्रियासिद्धिहेतुं सुरेंद्रादिसेव्यं मयूरेश० ॥६॥

महाकालरूपं निमेषादिरूपं कलाकल्परूपं सदागम्यरूपम् । जनज्ञानहेतुं नृणां सिद्धिदं तं मयूरेश० ॥ ७ ॥ महेशादिदेवैः सदा ध्येयपादं सदा रक्षकं तत्पदानां हतारिम् । मुदा कामरूपं कृपावारिधिं तं मयूरेश० ॥ ८ ॥ सदा भक्तिं नाथे प्रणयपरमानंदसुखदो यतस्त्वं लोकानां परमकरुणामाशु तनुषे । षडूर्मीनां वेगं सुरवर विनाशं नय विभो ततो भक्तिः श्लाघ्या तव भजनतोऽनन्यसुखदात् ॥ ९ ॥ किमस्माभिः स्तोत्रं सकलसुरतापालक विभो विधेयं विश्वात्मन्नगणितगुणानामधिपते । न संख्याता भूमिस्तव गुणगणानां त्रिभुवने न रूपाणां देव प्रकटय कृपां नोऽसुरहते ॥ १० ॥ मयूरेशं नमस्कृत्य ततो देवोऽब्रवीच्च तान् । य इदं पठते स्तोत्रं स कामाँल्लभतेऽखिलान् ॥ ११ ॥ सर्वत्र जयमाप्नोति मानमायुः श्रियं पराम् । पुत्रवान् धनसंपन्नो वश्यतामखिलं नयेत् ॥ १२ ॥ सहस्रावर्तनात्कारागृहस्थं मोचयेज्जनम् । नियुतावर्तनान्मर्त्यो साध्यं यत्साधयेत्क्षणात् ॥ १३ ॥ इति श्रीगणेशपुराणे उत्तरखण्डे बालचरित्रे मयूरेश्वरस्तोत्रं संपूर्णम् ॥

# विष्णुस्तोत्राणि ।



यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥

# विष्णुस्तोत्राणि ।

## २१. नारायणवर्म ।

श्रीगणेशाय नमः ॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् । क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् । यथाततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेंद्रायानुपृच्छते । नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौतांघ्रिपाणिराचम्य सपवित्र उदङ्मुखः । कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारायणमयं वर्म संनह्येद्भय आगते । दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ॥ ५ ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि । मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ॥ ६ ॥ ॐनमो नारायणायेति विपर्ययमथापि वा । करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ ७ ॥ प्रणवादि यकारांतमंगुल्यंगुष्ठपर्वसु । न्यसेद्धृदय ॐकारं विकारमनु मूर्धनि ॥ ८ ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया न्यसेत् । वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु ॥ ९ ॥ मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद्बुधः । सविसर्गं फडंतं तत्सर्वदिक्षु विनिर्दिशेत् ॥१०॥ ॐ विष्णवे नमः ॥ इत्यात्मानं परं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् । विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत् ॥ ११ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे । दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् । स्थलेषु मायाबटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृ-

सिंहोऽसुरयूथपारिः । विमुंचतो यस्य महाट्टहासं दिशो विनेदुर्न्यै-
पतंश्च गर्भाः ॥ १४ ॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयो-
न्नीतधरो वराहः । रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भर-
ताग्रजो माम् ॥ १५ ॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु
नरश्च हासात् । दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः
कर्मबंधात् ॥ १६ ॥ सनत्कुमारोऽवतु कामदेवाद्धयग्रीवो मां पथि
देवहेलनात् । देवर्षिवर्यः पुरुषार्चनांतरात्कूर्मो हरिर्मां निरयाद-
शेषात् ॥ १७ ॥ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृषभो निर्जि-
तात्मा । यज्ञश्च लोकादवताज्जनांताद्बलो गणात्क्रोधवशादहींद्रः
॥ १८ ॥ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाषंडगणात्प्रमादात् ।
कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥
मां केशवो गदया प्रातरव्याद्गोविंद आसंगव आत्तवेणुः । नारायणः
प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररींद्रपाणिः ॥ २० ॥ देवोऽपराह्णे
मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् । दोषे हृषीकेश
उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥ श्रीवत्सधामाऽ-
पररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः । दामोदरोऽव्यादनु-
संध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥ २२ ॥ चक्रं युगांता-
नलतिग्मनेमि भ्रमत्समंताद्भगवत्प्रयुक्तम् । दंदग्धि दंदग्ध्यरिसैन्य-
माशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥ गदेऽशनिस्पर्शन-
विस्फुलिंगे निष्पिंढि निष्पिंढ्यजितप्रियासि । कूष्मांडवैनायकयक्षरक्षो-
भूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥ त्वं यातुधानप्रमथप्रेतमातृ-
पिशाचविप्रग्रहघोरदृष्टीन् । दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरे-
र्हृदयानि कंपयन् ॥ २५ ॥ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो
मम छिंधि छिंधि । चक्षूंषि चर्मन् शतचंद्र छादय द्विषामघानां हर

पापचक्षुषाम् ॥ २६ ॥ यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च । सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥ २७ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् । प्रयांतु संक्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ॥ २८ ॥ गरुडो भगवांस्तोत्रस्तोभश्छंदोमयः प्रभुः । रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २९ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः । बुद्धींद्रियमनःप्राणान् पांतु पार्षद्भूषणाः ॥ ३० ॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनानेन नः सर्वे यांतु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् । भूषणायुधलिंगाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥ विदिक्षु दिक्षूर्ध्वमधः समंतादंतर्बहिर्भगवान्नारसिंहः । प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥ मघवन्निदमाख्यातं वर्म नारायणात्मकम् । विजेष्यस्यंजसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा । पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३६ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् । राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ॥ ३७ ॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन् द्विजः । योगधारणया स्वांगं जहौ स मरुधन्वनि ॥ ३८ ॥ तस्योपरि विमानेन गंधर्वपतिरेकदा । ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः । स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ ४० ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् । य इदं शृणुयात्काले यो धारयति चादृतः । तं नमस्यंति भूतानि मुच्यते सर्वतोभयात् ॥ ४१ ॥ श्रीशुक उवाच ॥ एतां

विद्यामधिगतो विश्वरूपाच्छतक्रतुः । त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधेऽष्टमेऽध्याये नारायणवर्मस्तोत्रं संपूर्णम् ॥

## २२. विष्णुपंजरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीविष्णुपंजरस्तोत्रमंत्रस्य, नारद ऋषिः, अनुष्टुप् छंदः, श्रीविष्णुः परमात्मा देवता, अहं बीजम्, सोऽहं शक्तिः, ॐ ह्रीं कीलकम्, मम सर्वदेहरक्षणार्थं जपे विनियोगः । नारदऋषये नमः मुखे । श्रीविष्णुपरमात्मदेवतायै नमः हृदये । अहं बीजं गुह्ये । सोऽहं शक्तिः पादयोः । ॐ ह्रीं कीलकं पादाग्रे । ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः इति मंत्रः । ॐह्रां अंगुष्ठाभ्यां नमः । ॐह्रीं तर्जनीभ्यां नमः । ॐह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐह्रौं कनिष्ठिकाभ्यां नमः । ॐह्रः करतलकरपृष्ठाभ्यां नमः । इति करन्यासः । अथ हृदयादिन्यासः । ॐह्रां हृदयाय नमः । ॐह्रीं शिरसे स्वाहा । ॐह्रूं शिखायै वषट् । ॐह्रैं कवचाय हुम् । ॐह्रौं नेत्रत्रयाय वौषट् । ॐह्रः अस्त्राय फट् । इति अंगन्यासः । अहंबीजप्राणायामं मंत्रत्रयेण कुर्यात् । अथ ध्यानम् ॥ परं परस्मात्प्रकृतेरनादिमेकं निविष्टं बहुधा गुहायाम् । सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम् ॥ १ ॥ ॐ विष्णुपंजरकं दिव्यं सर्वदुष्टनिवारणम् । उग्रतेजो महावीर्यं सर्वशत्रुनिकृंतनम् ॥ २ ॥ त्रिपुरं दहमानस्य हरस्य ब्रह्मणोदितम् । तदहं संप्रवक्ष्यामि आत्मरक्षाकरं नृणाम् ॥ ३ ॥ पादौ रक्षतु गोविंदो जंघे चैव त्रिविक्रमः । ऊरू मे केशवः पातु कटिं चैव जनार्दनः ॥ ४ ॥ नाभिं चैवाच्युतः पातु गुह्यं चैव तु वामनः ।

उदरं पद्मनाभश्च पृष्ठं चैव तु माधवः ॥ ५ ॥ वामपार्श्वं तथा विष्णुर्दक्षिणं मधुसूदनः । बाहू वै वासुदेवश्च हृदि दामोदरस्तथा ॥ ६ ॥ कंठं रक्षतु वाराहः कृष्णश्च मुखमंडलम् । माधवः कर्णमूले तु हृषीकेशश्च नासिके ॥ ७ ॥ नेत्रे नारायणो रक्षेल्ललाटं गरुडध्वजः । कपोलौ केशवो रक्षेद्वैकुंठः सर्वतोदिशम् ॥ ८ ॥ श्रीवत्सांकश्च सर्वेषामंगानां रक्षको भवेत् । पूर्वस्यां पुंडरीकाक्ष आग्नेय्यां श्रीधरस्तथा ॥ ९ ॥ दक्षिणे नारसिंहश्च नैर्ऋत्यां माधवोऽवतु । पुरुषोत्तमो मे वारुण्यां वायव्यां च जनार्दनः ॥ १० ॥ गदाधरस्तु कौबेर्यामीशान्यां पातु केशवः । आकाशे च गदा पातु पाताले च सुदर्शनम् ॥ ११ ॥ संनद्धः सर्वगात्रेषु प्रविष्टो विष्णुपंजरः । विष्णुपंजरविष्टोऽहं विचरामि महीतले ॥ १२ ॥ राजद्वारेऽपथे घोरे संग्रामे शत्रुसंकटे । नदीषु च रणे चैव चोरव्याघ्रभयेषु च ॥ १३ ॥ डाकिनीप्रेतभूतेषु भयं तस्य न जायते । रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर ॥ १४ ॥ रक्षंतु देवताः सर्वा ब्रह्मविष्णुमहेश्वराः । जले रक्षतु वाराहः स्थले रक्षतु वामनः ॥ १५ ॥ अटव्यां नारसिंहश्च सर्वतः पातु केशवः । दिवा रक्षतु मां सूर्यो रात्रौ रक्षतु चंद्रमाः ॥ १६ ॥ पंथानं दुर्गमं रक्षेत्सर्वमेव जनार्दनः । रोगविघ्नहतश्चैव ब्रह्महा गुरुतल्पगः ॥ १७ ॥ स्त्रीहंता बालघाती च सुरापो वृषलीपतिः । मुच्यते सर्वपापेभ्यो यः पठेन्नात्र संशयः ॥ १८ ॥ अपुत्रो लभते पुत्रं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां मोक्षार्थी लभते गतिम् ॥ १९ ॥ आपदो हरते नित्यं विष्णुस्तोत्रार्थसंपदः । यस्त्विदं पठति स्तोत्रं विष्णुपंजरमुत्तमम् ॥ २० ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । गोसहस्रफलं तस्य वाजपेयशतस्य च ॥ २१ ॥ अश्वमेध-

सहस्रस्य फलं प्राप्नोति मानवः । सर्वकामं लभेदस्य पठनान्नात्र संशयः ॥ २२ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके । ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ २३ ॥ इति श्रीब्रह्मांडपुराणे इंद्रनारदसंवादे श्रीविष्णुपंजरस्तोत्रं संपूर्णम् ॥

## २३. श्रीमदच्युताष्टकम् ।

श्रीगणेशाय नमः ॥ अच्युताच्युत हरे परमात्मन् राम कृष्ण पुरुषोत्तम विष्णो । वासुदेव भगवन्ननिरुद्ध श्रीपते शमय दुःखमशेषम् ॥ १ ॥ विश्वमंगल विभो जगदीश नंदनंदन नृसिंह नरेंद्र । मुक्तिदायक मुकुंद मुरारे श्रीपते शमय दुःखमशेषम् ॥ २ ॥ रामचंद्र रघुनायक देव दीननाथ दुरितक्षयकारिन् । यादवेंद्र यदुभूषण यज्ञ श्रीपते शमय दुःखमशेषम् ॥ ३ ॥ देवकीतनय दुःखदवाग्ने राधिकारमण रम्यसुमूर्ते । दुःखमोचन दयार्णव नाथ श्रीपते शमय दुःखमशेषम् ॥ ४ ॥ गोपिकावदनचंद्रचकोर नित्य निर्गुण निरंजन जिष्णो । पूर्णरूप जय शंकर सर्व श्रीपते शमय दुःखमशेषम् ॥ ५ ॥ गोकुलेश गिरिधारण धीर यामुनाच्छतटखेलन वीर । नारदादिमुनिवंदितपाद श्रीपते शमय दुःखमशेषम् ॥ ६ ॥ द्वारकाधिप दुरंतगुणाब्धे प्राणनाथ परिपूर्ण भवारे । ज्ञानगम्य गुणसागर ब्रह्मन् श्रीपते शमय दुःखमशेषम् ॥ ७ ॥ दुष्टनिर्दलन देव दयालो पद्मनाभ धरणीधरधारिन् । रावणांतक रमेश मुरारे श्रीपते शमय दुःखमशेषम् ॥ ८ ॥ अच्युताष्टकमिदं रमणीयं निर्मितं भवभयं विनिहंतुम् । यः पठेद्विषयवृत्तिनिवृत्तिर्जन्मदुःखमखिलं स जहाति ॥ ९ ॥ इति श्रीशंकराचार्यविरचितमच्युताष्टकस्तोत्रं समाप्तम् ॥

## २४. अच्युताष्टकम् ।

श्रीगणेशाय नमः ॥ अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् । श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे ॥ १ ॥ अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम् । इंदिरामंदिरं चेतसा सुंदरं देवकीनंदनं नंदजं संदधे ॥ २ ॥ विष्णवे जिष्णवे शंखिने चक्रिणे रुक्मिणीरागिणे जानकीजानये । बल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥ ३ ॥ कृष्ण गोविंद हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे । अच्युतानंत हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥ राक्षसक्षोभितः सीतया शोभितो दंडकारण्यभूपुण्यताकारणः । लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम् ॥ ५ ॥ धेनुकारिष्टकोऽनिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः । पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥ ६ ॥ विद्युदुद्द्योतवान्प्रस्फुरद्वाससं प्रावृडंभोदवत्प्रोल्लसद्विग्रहम् । वन्यया मालया शोभितोरःस्थलं लोहितांघ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥ कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिं लसत्कुंडलं गंडयोः । हारकेयूरकं कंकणप्रोज्ज्वलं किंकिणीमंजुलं श्यामलं तं भजे ॥ ८ ॥ अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् । वृत्ततः सुंदरं कर्तृ विश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९ ॥ इति श्रीशंकराचार्यविरचितमच्युताष्टकं संपूर्णम् ॥

## २५. आचार्यकृतषट्पदी ।

श्रीगणेशाय नमः ॥ अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् । भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥

दिव्यधुनीमकरंदे परिमलपरिभोगसच्चिदानंदे । श्रीपतिपदारविंदे भवभयखेदच्छिदे वंदे ॥ २ ॥ सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरंगः क्वचन समुद्रो न तारंगः ॥ ३ ॥ उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे । दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता सदा वसुधाम् । परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५ ॥ दामोदर गुणमंदिर सुंदरवदनारविंद गोविंद । भवजलधिमथनमंदर परमं दरमपनय त्वं मे ॥ ६ ॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ । इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ ७ ॥ इति श्रीमच्छंकराचार्यविरचितं षट्पदीस्तोत्रं संपूर्णम् ॥

## २६. मधुसूदनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐमिति ज्ञानमात्रेश रोगाजीर्णेन निर्जितः । कालनिद्रां प्रपन्नोऽस्मि त्राहि मां मधुसूदन ॥ १ ॥ न गतिर्विद्यते चान्या त्वमेव शरणं मम । पापपङ्के निमग्नोऽस्मि त्राहि० ॥ २ ॥ मोहितो मोहजालेन पुत्रदारगृहादिषु । तृष्णया पीड्यमानोऽस्मि त्राहि० ॥ ३ ॥ भक्तिहीनं च दीनं च दुःखशोकातुरं प्रभो । अनाश्रयमनाथं च त्राहि० ॥ ४ ॥ गतागतेन श्रान्तोऽस्मि दीर्घसंसारवर्त्मसु । येन भूयो न गच्छामि त्राहि० ॥ ५ ॥ बहवो हि मया दृष्टा क्लेशाश्चैव पृथक् पृथक् । गर्भवासे महद्दुःखं त्राहि० ॥६॥ तेन देव प्रपन्नोऽस्मि त्राणार्थं त्वत्परायणः । दुःखार्णवपरित्राणात् त्राहि० ॥ ७ ॥ वाचा यत्र प्रतिज्ञातं कर्मणा नोपपादितम् । तत्पापार्जितमग्नोऽस्मि त्राहि० ॥ ८ ॥ सुकृतं न कृतं किंचिद्दुष्कृतं च कृतं मया ।

घोरे भवे निमग्नोऽस्मि त्राहि० ॥ ९ ॥ देहान्तरसहस्रेषु चान्योन्यं भ्रामितो ह्यहम् । तिर्यक्त्वं मानुषत्वं च त्राहि० ॥ १० ॥ वाचयामि यथोन्मत्तःप्रलपामि तवाग्रतः । जरामरणभीतोऽस्मि त्राहि० ॥ ११ ॥ यत्र यत्र च यातोऽस्मि स्त्रीषु वा पुरुषेषु वा । तत्र तत्राचला भक्तिस्त्राहि० ॥ १२ ॥ गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । कदापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥ १३ ॥ ऊर्ध्वपाताल-मर्त्येषु व्याप्तलोकजगत्त्रयम् । द्वादशाक्षरात्परं नास्ति वासुदेवेन भाषितम् ॥ १४ ॥ द्वादशाक्षरं महामन्त्रं सर्वकामफलप्रदम् । गर्भवासनिवासेन शुकेन परिभाषितम् ॥ १५ ॥ द्वादशाक्षरं निराहारो यः पठेद्धरिवासरे । स गच्छेद्वैष्णवं स्थानं यत्र योगेश्वरो हरिः ॥ १६ ॥ इति श्रीशुकदेवविरचितं मधुसूदनस्तोत्रं संपूर्णम् ॥

## २७. विष्णुस्तवराजः ।

श्रीगणेशाय नमः ॥ पद्मोवाच ॥ योगेन सिद्धविबुधैः परिभाव्य-मानं लक्ष्म्यालयं तुलसिकाचितभक्तभृंगम् । प्रोत्तुंगरक्तनखरांगुलि-पत्रचित्रं गंगारसं हरिपदांबुजमाश्रयेऽहम् ॥ १ ॥ गुंफन्मणि-प्रचयघट्टितराजहंससिंजत्सुनूपुरयुतं पदपद्मवृंदम् । पीतांबरांचल-विलोलचलत्पताकं स्वर्णत्रिवक्रवलयं च हरेः स्मरामि ॥ २ ॥ जंघे सुपर्णगलनीलमणिप्रवृद्धे शोभास्पदारुणमणिद्युतिचंचुमध्ये । आर-क्तपादतललंबनशोभमाने लोकेक्षणोत्सवकरे च हरेः स्मरामि ॥ ३ ॥ ते जानुनी मखपतेर्भुजमूलसंगरंगोत्सवावृततडिद्वसने विचित्रे । चंचत्पतत्रिमुखनिर्गतसामगीतविस्तारितात्मयशसी च हरेः स्मरामि ॥ ४ ॥ विष्णोः कटिं विधिकृतांतमनोजभूमिं जीवांड-कोशगणसंगदुकूलमध्याम् । नानागुणप्रकृतिपीतविचित्रवस्त्रां ध्याये निबद्धवसनां खगपृष्ठसंस्थाम् ॥ ५ ॥ शांतोदरं भगवतस्त्रिव-

ल्लिप्रकाशमावर्तनाभिविकसद्विधिजन्मपद्मम् । नाडीनदीगणरसोत्थसितांत्रसिंधुं ध्यायेऽण्डकोशनिलयं तनुलोमरेखम् ॥ ६ ॥ वक्षः पयोधितनयाकुचकुंकुमेन हारेण कौस्तुभमणिप्रभया विभातम् । श्रीवत्सलक्ष्म हरिचंदनजप्रसूनमालोचितं भगवतः सुभगं स्मरामि ॥ ७ ॥ बाहू सुवेषसदनौ वलयांगदादिशोभास्पदौ दुरितदैत्यविनाशदक्षौ । तौ दक्षिणौ भगवतश्च गदासुनाभतेजोर्जितौ सुललितौ मनसा स्मरामि ॥ ८ ॥ वामौ भुजौ मुररिपोर्धृतपद्मशंखौ श्यामौ करींद्रकरवन्मणिभूषणाढ्यौ । रक्तांगुलिप्रचयचुंबितजानुमध्यौ पद्मालयाप्रियकरौ रुचिरौ स्मरामि ॥ ९ ॥ कंठं मृणालममलं मुखपंकजस्य लेखात्रयेण वनमालिकया निवीतम् । किंवा विमुक्तिवशमंत्रकसत्फलस्य वृंतं चिरं भगवतः सुभगं स्मरामि ॥ १० ॥ वक्त्रांबुजं दशनहासविकासरम्यं रक्ताधरोष्ठवरकोमलवाक्सुधाढ्यम् । सन्मानसोद्भवचलेक्षणपत्रचित्रं लोकाभिराममलं च हरेः स्मरामि ॥ ११ ॥ सूरात्मजावसथगंधमिदं सुनासं भ्रूपल्लवं स्थितिलयोदयकर्मदक्षम् । कामोत्सवं च कमलाहृदयप्रकाशं संचिंतयामि हरिवक्त्रविलासदक्षम् ॥ १२ ॥ कर्णौ लसन्मकरकुंडलगंधलोलौ नानादिशां च नभसश्च विकासगेहम् । लोलालकप्रचयचुंबनकुंचिताग्रौ लग्नौ हरेर्मणिकिरीटतटे स्मरामि ॥ १३ ॥ भालं विचित्रतिलकं प्रियचारुगंधगोरोचनारचनया ललनाक्षिसख्यम् । ब्रह्मैकधाम मणिकांतकिरीटजुष्टं ध्याये मनोनयनहारकमीश्वरस्य ॥ १४ ॥ श्रीवासुदेवचिकुरं कुटिलं निबद्धं नानासुगंधिकुसुमैः स्वजनादरेण । दीर्घं रमाहृदयगाशमनं धुनंतं ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये ॥ १५ ॥ मेघाकारं सोमसूर्यप्रकाशं सुभ्रून्नासं शक्रचापैकमानम् । लोकातीतं पुंडरीकायताक्षं विद्युच्चैलं चाश्रयेऽहं

त्वपूर्वम् ॥ १६ ॥ दीनं हीनं सेवया दैवगत्या पापैस्तापैः पूरितं मे शरीरम् । लोभाक्रांतं शोकमोहादिविद्धं कृपादृष्ट्या पाहि मां वासुदेव ॥ १७ ॥ ये भक्त्याद्यां ध्यायमानां मनोज्ञां व्यक्तिं विष्णोः षोडशश्लोकपुष्पैः । स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्मसौख्यं प्रयांति ॥ १८ ॥ पद्मेरितमिदं पुण्यं शिवेन परिभाषितम् । धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ १९ ॥ पठंति ये महाभागास्ते मुच्यंतेंऽहसोऽखिलात् । धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम् ॥ २० ॥ इति श्रीकल्किपुराणेऽनुभागवते भविष्ये पाद्मप्रोक्तो विष्णुस्तवराजः संपूर्णः ॥

## २८. विष्ण्वष्टकम् ।

श्रीगणेशाय नमः ॥ पुरः सृष्टाविष्टः पुरुष इति तत्प्रेक्षणमुखः सहस्राक्षो भुक्त्वा फलमनुशयी शास्ति तमुत । स्वयं शुद्धं शान्तं निरवधिसुखं नित्यमचलं नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥ १ ॥ अनन्तं सत्सत्यं भवभयहरं ब्रह्म परमं सदा भातं नित्यं जगदिदमितः कल्पितपरम् । मुहुर्ज्ञानं यस्मिन् रजतमिव शुक्तौ भ्रमहरं नमामि० ॥ २ ॥ मतौ यत्सद्रूपं मृगयति बुधोऽतन्निरसनाद्य रज्जौ सर्पोऽपि मुकुरजठरे नास्ति वदनम् । अतोऽपार्थं सर्वं न हि भवति यस्मिंश्च तमहं नमामि० ॥ ३ ॥ भ्रमद्धीविक्षिप्तेन्द्रियपथमनुष्यैर्हृदि विभुं नयं वै वेद स्वेन्द्रियमपि वसंत निजसुखम् । सदा सेव्यं भक्तैर्मुनिमनसि दीप्तं मुनिनुतं नमामि० ॥ ४ ॥ बुधा यत्तद्रूपं न हि तु निर्गुण्यममलं यथा ये व्यक्तं ते सततमकलङ्कं श्रुतिनुतम् । यदाहुः सर्वत्रास्खलितगुणसत्ताकमतुलं नमामि० ॥५॥ लयादौ यस्मिन्यद्विलयमपि उद्यत्प्रभवति तथा जीवोपेतं गुरुकरुणया बोधजनने । गतं चात्यंतान्तं व्रजति सहसा सिन्धुनदव-

नमामि० ॥६॥ जडं सञ्जातं यन्निमिषलवलेशेन चपलं यथा स्वं स्वं कार्यं प्रथयति महामोहजनकम्। मनोवाग्जीवानां न निविशति यं निर्भयपदं नमामि० ॥ ७ ॥ गुणाख्याने यस्मिन्प्रभवति न वेदोऽपि नितरां निषिध्यद्वाक्यार्थैश्चकितचकितं योऽस्य वचनम्। स्वरूपं यद्गत्वा प्रभुरपि च तूष्णीं भवति तं नमामि श्रीविष्णुं जलधितनया-सेवितपदम् ॥ ८ ॥ विष्ण्वष्टकं यः पठति प्रभाते नरोऽप्यखण्डं सुखमश्नुते च। यन्निलयबोधाय सुबुद्धिनोक्तं रघूत्तमाख्येन विचार्य सम्यक् ॥ ९ ॥ इति श्रीविष्ण्वष्टकं संपूर्णम् ॥

## २९. नारायणस्तोत्रम्।

श्रीगणेशाय नमः ॥ नारायण नारायण जय गोविंद हरे। नारायण नारायण जय गोपाल हरे ॥ करुणापारावार वरुणालय-गंभीर। नारायण० ॥ १ ॥ घननीरदसंकाश कृतकलिकल्मषनाश। नारायण० ॥ २ ॥ यमुनातीरविहार धृतकौस्तुभमणिहार। नारायण० ॥ ३ ॥ पीतांबरपरिधान सुरकल्याणनिधान। नारायण० ॥ ४ ॥ मंजुलगुंजाभूष मायामानुषवेष। नारायण० ॥ ५ ॥ राधाधरमधुरसिक रजनीकरकुलतिलक। नारायण० ॥ ६ ॥ मुरलीगानविनोद वेदस्तुतभूपाद। नारायण० ॥ ७ ॥ बर्हिनिब-र्हापीड नटनाटकफणिक्रीड। नारायण० ॥ ८ ॥ वारिजभूषाभरण राजीवरुक्मिणीरमण। नारायण० ॥ ९ ॥ जलरुहदलनिभनेत्र जगदारंभकसूत्र। नारायण० ॥ १० ॥ पातकरजनीसंहर करुणा-लय मामुद्धर। नारायण० ॥ ११ ॥ अघबकक्षयकंसारे केशव कृष्ण मुरारे। नारायण० ॥ १२ ॥ हाटकनिभपीतांबर अभयं कुरु मे मावर। नारायण० ॥ १३ ॥ दशरथराजकुमार दानवमद-संहार। नारायण० ॥ १४ ॥ गोवर्धनगिरिरमण गोपीमानसहरण।

नारायण० ॥ १५ ॥ शरयूतीरविहार सज्जनऋषिमंदार । नारायण० ॥ १६ ॥ विश्वामित्रमखत्र विविधपरासुचरित्र । नारायण० ॥१७॥ ध्वजवज्रांकुशपाद धरणीसुतसहमोद । नारायण० ॥ १८ ॥ जनकसुताप्रतिपाल जय जय संस्मृतिलील । नारायण० ॥ १९ ॥ दशरथवाग्धृतिभार दंडकवनसंचार । नारायण० ॥ २० ॥ मुष्टिकचाणूरसंहार मुनिमानसविहार । नारायण० ॥ २१ ॥ वालिविनिग्रहशौर्य वरसुग्रीवहितार्य । नारायण० ॥ २२ ॥ मां मुरलीकर धीवर पालय पालय श्रीधर । नारायण० ॥ २३ ॥ जलनिधिबंधनधीर रावणकंठविदार । नारायण० ॥ २४ ॥ ताटीमददलनाढ्य नटगुणविविधधनाढ्य । नारायण० ॥ २५ ॥ गौतमपत्नीपूजन करुणाघनावलोकन । नारायण० ॥ २६ ॥ संभ्रमसीताहार साकेतपुरविहार । नारायण० ॥ २७ ॥ अचलोद्धृतिचंचत्कर भक्तानुग्रहतत्पर । नारायण० ॥ २८ ॥ नैगमगानविनोद रक्षःसुतप्रह्लाद । नारायण० ॥ २९ ॥ भारतियतिवरशंकर नानामृतमखिलांतर । नारायण नारायण जय गोपाल हरे ॥ ३० ॥ इति श्रीमच्छंकराचार्यविरचितं नारायणस्तोत्रं संपूर्णम् ॥

## ३०. विष्णुभुजंगप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चिदंशं विभुं निर्मलं निर्विकल्पं निरीहं निराकारमोंकारगम्यम् । गुणातीतमव्यक्तमेकं तुरीयं परं ब्रह्म यं वेद तस्मै नमस्ते ॥ १ ॥ विशुद्धं शिवं शान्तमाद्यंतशून्यं जगज्जीवनं ज्योतिरानन्दरूपम् । अदिग्देशकालव्यवच्छेदनीयं त्रयो वक्ति यं वेद तस्मै नमस्ते ॥ २ ॥ महायोगपीठे परिभ्राजमाने धरण्यादितत्त्वात्मके शक्तियुक्ते । गुणाहस्करे वह्निबिम्बार्कमध्ये समासीनमोंकर्णिकेऽष्टाक्षराब्जे ॥ ३ ॥ समानोदितानेकसूर्येंदुकोटिप्रभापूरतुल्य-

द्युतिं दुर्निरीक्ष्यम् । न शीतं न चोष्णं सुवर्णावदातप्रसन्नं सदानन्दसंवित्स्वरूपम् ॥ ४ ॥ सुनासापुटं सुन्दरभ्रूललाटं किरीटोचिताकुञ्चितस्निग्धकेशम् । स्फुरत्पुंडरीकाभिरामायताक्षं समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ५ ॥ लसत्कुण्डलामृष्टगंडस्थलान्तं जपारागचोराधरं चारुहासम् । अलिव्याकुलामोदिमन्दारमालं महोरस्फुरत्कौस्तुभोदारहारम् ॥ ६ ॥ सुरत्नाङ्गदैरन्वितं बाहुदण्डैश्चतुर्भिश्चलत्कङ्कणालंकृताग्रैः । उदारोदरालंकृतं पीतवस्त्रं पदद्वंद्वनिर्धूतपद्माभिरामम् ॥ ७ ॥ स्वभक्तेषु संदर्शिताकारमेवं सदा भावयन्संनिरुद्धेन्द्रियाश्वः । दुरापं नरो याति संसारपारं परस्मै परेभ्योऽपि तस्मै नमस्ते ॥८॥ श्रिया शातकुम्भद्युतिस्निग्धकान्त्या धरण्या च दूर्वादलश्यामलाङ्ग्या । कलत्रद्वयेनामुना तोषिताय त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥ ९ ॥ शरीरं कलत्रं सुतं बन्धुवर्गं वयस्यं धनं सद्म भृत्यं भुवं च । समस्तं परित्यज्य हा कष्टमेको गमिष्यामि दुःखेन दूरं किलाहम् ॥ १० ॥ जरेयं पिशाचीव हा जीवतो मे वसामत्ति रक्तं च मांसं बलं च । अहो देव सीदामि दीनानुकंपिन् किमद्यापि हन्त त्वयोदासितव्यम् ॥ ११ ॥ कफव्याहतोष्णोल्बणश्वासवेगव्यथाविस्फुरत्सर्वमर्मास्थिबन्धम् । विचिन्त्याहमन्त्यामसंख्यामवस्थां बिभेमि प्रभो किं करोमि प्रसीद ॥ १२ ॥ लपन्नच्युतानन्त गोविन्द विष्णो मुरारे हरे नाथ नारायणेति । यथानुस्मरिष्यामि भक्त्या भवन्तं तथा मे दयाशील देव प्रसीद ॥ १३ ॥ भुजङ्गप्रयातं पठेद्यस्तु भक्त्या समाधाय चित्ते भवन्तं मुरारे । स मोहं विहायाशु युष्मत्प्रसादात्समाश्रित्य योगं व्रजत्यच्युतं त्वाम् ॥ १४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ विष्णुभुजंगप्रयातस्तोत्रं संपूर्णम् ॥

## ३१. जितं ते स्तोत्रम् ।

प्रथमभागः ॥

श्रीगणेशाय नमः ॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ १ ॥ देवानां दानवानां च सामान्यमधिदैवतम् । सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥ २ ॥ एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा । अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥ ३ ॥ संसारसागरं घोरमनन्तक्लेशभाजनम् । त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥ ४ ॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥५॥ नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् । नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित् ॥ ६ ॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् । योगानां परमां सिद्धिं परमं ते पदं विदुः ॥ ७ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन्भयावहे । पाहि मां पुंडरीकाक्ष न जाने शरणं परम् ॥ ८ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत । शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥ ९ ॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि । निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ १० ॥ विज्ञानं यदिदं प्राप्तं यदिदं स्थानमर्जितम् । जन्मान्तरेऽपि मे देव मा भूत्तस्य परिक्षयः ॥ ११ ॥ दुर्गतावपि जातायां त्वद्गतो मे मनोरथः । यदि नाशं न विन्देत तावतास्मि कृती सदा ॥ १२ ॥ न कामकलुषं चित्तं मम ते पादयोः स्थितम् । कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥ १३ ॥ सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत । किंकरोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः ॥ १४ ॥ इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने । किंकरोऽस्मीति चात्मानं

देवायैवं निवेदयेत् ॥ १५ ॥ यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम । मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि ॥ १६ ॥ अहङ्कारार्थकामेषु प्रीतिरद्यैव नश्यतु । त्वां प्रपन्नस्य मे देव वर्धतां श्रीमति त्वयि ॥ १७ ॥ क्वाहमत्यंतदुर्बुद्धिः क्व चात्महितवीक्षणम् । यद्धितं मम देवेश तदाज्ञापय माधव ॥ १८ ॥ सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च । सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥ १९ ॥ उपचारापदेशेन कृतानहरहर्मया । अपचारानिमान्सर्वान् क्षमस्व पुरुषोत्तम ॥ २० ॥

द्वितीयभागः ॥ जितं ते पुंडरीकाक्ष पूर्वषाड्गुण्यविग्रह । परानन्द परं ब्रह्मन्नमस्ते परमात्मने ॥ १ ॥ नमस्ते पीतवसन नमः कटकधारिणे । नमो नीलालकाबद्धवेणीसुंदरविग्रह ॥ २ ॥ स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः । शोभनैर्भूषिताकार कल्याणगुणवारिधे ॥ ३ ॥ करुणापूर्णहृदय शङ्खचक्रगदाधर । अमृतानन्दपूर्णाभ्यां लोचनाभ्यां विलोकय ॥ ॥ ४ ॥ कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् । अपराधसहस्राणामाकरं करुणाकर ॥ ५ ॥ कृपया मां केवलया गृहाण मधुराधिप । विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ॥६॥ पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव हि । विद्या धनं च काम्यं च नान्यत्किञ्चित्त्वया विना ॥७॥ यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे । तव दास्यैकभोगे स्यात्सदा सर्वत्र मे रतिः ॥ ८ ॥ मनसा कर्मणा वाचा शिरसा वा कथंचन । त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम् ॥ ९ ॥ पाहि पाहि जगन्नाथ कृपया भक्तवत्सल । अनाथोऽहमधन्योऽहमकृतार्थः कथंचन ॥ १० ॥ नृशंसः पापकृत्क्रूरो वञ्चको निष्ठुरः सदा । भवार्णवनिमग्नं मामनन्यं करुणोदधे ॥ ११ ॥ करुणापूर्णदृष्टिभ्यां दीनं

मामवलोकय । त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ॥ १२ ॥ मया कृतानि पापानि त्रिविधानि पुनः पुनः । त्वत्पादपंकजं प्राप्तुं नान्यत्त्वत्करुणां विना ॥ १३ ॥ साधनानि प्रसिद्धानि यागादीन्यब्जलोचन । त्वदाज्ञया प्रयुक्तानि त्वामुद्दिश्य कृतानि वै ॥ १४ ॥ भक्त्यैकलभ्यः पुरुषोत्तमोऽसौ जगत्प्रसूतिस्थितिनाशहेतुः । अकिंचनोऽनन्यगतिः शरण्य गृहाण मां क्लेशिनमम्बुजाक्ष ॥ १५ ॥ धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन । त्वत्पादपङ्कजास्वादजीवितं दीयतां मम ॥ १६ ॥ कामये तावकत्वेन परिचर्यानुवर्तनम् । नित्यकिंकरभावेन परिगृह्णीष्व मां विभो ॥ १७ ॥ लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् । अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ १८ ॥ नित्यसिद्धैः समाकीर्णं तन्मयैः पाञ्चकालिकैः । सभाप्रासादसंयुक्तं वनैश्चोपवनैर्युतम् ॥ १९ ॥ वापीकूपतटाकैश्च वृक्षखण्डैः सुमंडितम् । अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ॥ २० ॥ प्रकृष्टसत्त्वसंपन्नं कदा द्रक्ष्यामि चक्षुषा । क्रीडंतं रमया सार्धं लीलाभूमिषु केशवम् ॥ २१ ॥ मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा । उन्नसं चारुवदनं बिम्बोष्ठं शोभिताननम् ॥ २२ ॥ विशालवक्षसं श्रीशं कंबुग्रीवं जगद्गुरुम् । आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ॥ २३ ॥ विशालनिम्ननाभिं तमापीनजघनं हरिम् । करभोरुं श्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा ॥२४॥ शङ्खचक्रगदापद्मैरङ्कितं पादपङ्कजम् । शरच्चन्द्रशताक्रान्तनखराजिविराजितम् ॥ २५ ॥ सुरासुरैर्वन्द्यमानमृषिभिर्वन्दितं सदा । कदा वा देव मूर्धानं मामकं मंडयिष्यति ॥ २६ ॥ कदा गंभीरया वाचा श्रिया युक्तो जगत्पतिः । चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यति ॥ २७ ॥ कदाऽहं राजराजेन गणनाथेन चोदितः । चरेयं

भगवत्पादपरिचर्यानुवृत्तिषु ॥ २८ ॥ शान्ताय च विशुद्धाय तेजसे परमात्मने । नमो भगवते विष्णो वासुदेवामितद्युते ॥ २९ ॥ नमः सर्वगुणातीत षड्गुणायादिवेधसे । सत्यज्ञानानन्तगुण ब्रह्मणे परमात्मने ॥ ३० ॥ चतुःपञ्चनवव्यूहदशद्वादशमूर्तये । नमस्ते वासुदेवाय ब्रह्मणे चतुरात्मने ॥३१॥ नमोऽनंताय विश्वाय विश्वातीताय चक्रिणे । नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ॥ ३२ ॥ पञ्चकालैकमनसां त्वमेव गतिरव्ययः । परे व्योम्नि स्थितं देवं निरवद्यं निरंजनम् ॥ ३३ ॥ अप्रमेयमजं विष्णुमब्जनाभं सुरेश्वरम् । वागतीतं परं शान्तं शरणं त्वां गतोऽस्म्यहम् ॥ ३४ ॥ धुर्यं द्वन्द्वातिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् । विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥ ३५ ॥ मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन । इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत ॥ ३६ ॥ सकलावरणातीत किंकरोऽस्मि तवानघ । पुनः पुनः किंकरोऽस्मि तवाहं पुरुषोत्तम ॥ ३७ ॥ आसनाद्यनुयागान्तमर्चनं यन्मया कृतम् । भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ॥ ३८ ॥ तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु । इति स्तोत्रेण देवेशं स्तुत्वा मधुनिघातिनम् ॥ ३९ ॥ यागावसानसमये देवदेवस्य चक्रिणः । नित्यकिंकरभावेन स्वात्मानं विनिवेदयेत् ॥ ४० ॥

तृतीयभागः ॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ १ ॥ विज्ञापनमिदं देव शृणु त्वं पुरुषोत्तम । नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥ २ ॥ नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः । ब्रह्मेशाद्यैः सुरगणैः पंचकालपरायणैः ॥ ३ ॥ पूज्यसे पुंडरीकाक्ष दिव्यमब्रैर्महर्षिभिः । पाखंडधर्मसंकीर्णे भगवद्भक्तिवर्जिते ॥ ४ ॥ कलौ

जातोऽस्मि देवेश सर्वधर्मबहिष्कृते । कथं त्वामसमाचारः पापप्रसवभूरहम् ॥ ५ ॥ अर्चयामि दयासिन्धो पाहि मां शरणागतम् । तापत्रयदवाग्नौ मां दह्यमानं सदा विभो ॥ ६ ॥ त्राहि मां पुंडरीकाक्ष केवलं कृपया तव । जन्ममृत्युजराव्याधिदुःखसंतप्तदेहिनम् ॥ ७ ॥ पालयाशु दृशा देव तव कारुण्यगर्भया । इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ॥ ८ ॥ शरीरं मम देवेश व्याधिभिः परिपीडितम् । मनो मे पुंडरीकाक्ष विषयानेव धावति ॥ ९ ॥ वाणी मम हृषीकेश मिथ्यापारुष्यदूषिता । एवं साधनहीनोऽहं किं करिष्यामि केशव ॥ १० ॥ रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा । अपराधशतं चैव सहस्रमयुतं तथा ॥ ११ ॥ अर्बुदं चाप्यसंख्येयं करुणाब्धे क्षमस्व मे । यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ॥ १२ ॥ मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि । अज्ञत्वादप्यशक्तत्वादालस्याद्दुष्टभावनात् ॥ १३ ॥ कृतापराधं कृपणं क्षन्तुमर्हसि मां विभो । अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥ १४ ॥ तानि सर्वाणि मे देव क्षमस्व मधुसूदन । यज्जन्मनः प्रभृति मोहवशं गतेन नानापराधशतमाचरितं मया ते । अन्तर्बहिश्च सकलं तव पश्यतो मे क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥ १५ ॥ कर्मणा मनसा वाचा या चेष्टा मम नित्यशः । केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥ १६ ॥

चतुर्थभागः ॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्ते वासुदेवाय शांतानंतचिदात्मने ॥ १ ॥ अध्यक्षाय स्वतन्त्राय निरपेक्षाय शासते । अच्युतायाविकाराय तेजसां निधये नमः ॥ २ ॥ प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम । क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्तये ॥ ३ ॥ त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्यन्त-

रात्मने । त्रियुगाय नमस्तेऽस्तु नमस्ते चतुरात्मने ॥ ४ ॥ चतुः-पञ्चनवव्यूहदशद्वादशमूर्तये । अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये ॥ ५ ॥ नारायण नमस्तेऽस्तु पुंडरीकायतेक्षण । सुभ्रूललाट सुनस सुस्मिताधरपल्लव ॥ ६ ॥ पीनवृत्तायतभुज श्रीवत्सकृत-लक्षण । तनुमध्य विशालाक्ष पद्मनाभ नमोऽस्तु ते ॥ ७ ॥ विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज । नमस्ते पीतवसन स्फुर-न्मकरकुण्डल ॥ ८ ॥ स्फुरत्किरीटकेयूर हारकौस्तुभभूषण । पञ्चा-युध नमस्तेऽस्तु नमस्ते पाञ्चकालिक ॥ ९ ॥ पञ्चकालपरैकान्ति-योगक्षेममहाप्रभो । नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ॥ १० ॥ नमस्ते ब्रह्मरुद्रादि लोकयात्रापरिच्छद । जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ॥ ११ ॥ त्वं च स्वामी गुरुश्चात्मा पिता च मम माधव । अपि त्वां भगवन् ब्रह्मा शर्वः शक्रो महर्षयः ॥ १२ ॥ द्रष्टुं यष्टुमपि स्तोतुं न हि स्मर्तुमपीशते । तापत्रयमहाग्राहभीषणे भवसागरे ॥ १३ ॥ मज्जतां नाथ नौरेषा प्रणतिस्त्वत्पदार्पिता । अनाथाय जगन्नाथ शरण्य शरणार्थिने ॥ १४ ॥ प्रसीद सीदते मह्यं नमस्ते भक्तवत्सल । मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चनम् ॥ १५ ॥ तत्क्षंतव्यं प्रपन्नानामपराधसहो ह्यसि । अज्ञानाद्यदि वा ज्ञानादशुभं यत्कृतं मया ॥ १६ ॥ क्षंतव्यं तदशेषेण दास्येन च गृहाण माम् । सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत । किंकरोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः ॥ १७ ॥

पञ्चमभागः ॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ १ ॥ नमस्ते वासुदेवाय शान्ता-नन्ताजितात्मने । अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥ २ ॥

महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम । सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥ ३ ॥ सहस्रबाहवे तुभ्यं सहस्रनयनाय ते । अमूर्ताय नमस्तुभ्यमेकमूर्ताय ते नमः ॥ ४ ॥ अनेकमूर्तये तुभ्यमक्षराय च ते नमः । व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥ ५ ॥ चिन्मात्ररूपिणे तुभ्यं नमस्त्रय्यंतमूर्तये । अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥ ६ ॥ नेदिष्ठाय यविष्ठाय सर्वान्तर्यामिने नमः । वर्षिष्ठाय जविष्ठाय कनिष्ठाय च ते नमः ॥ ७ ॥ पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिने नमः । कल्पनाक्रोडरूपाय सृष्टिस्थित्यन्तहेतवे ॥ ८ ॥ नमस्ते गुणरूपाय गुणरूपादिवर्तिने । व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥ ९ ॥ आदिमध्यान्तशून्याय सत्त्वस्थाय नमो नमः । प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ १० ॥ लोकयात्राप्रसिद्ध्यर्थं स्रष्टुर्ब्रह्मादिरूपिणे । नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥ ११ ॥ विपाकैः कर्मभिः क्षोभैरस्पृष्टवपुषे नमः । नित्यसाधारणानेकलोकरक्षापरिच्छिदे ॥ १२ ॥ सच्चिदानन्दरूपाय वरेण्याय नमो नमः । यजमानाय यज्ञाय यष्टव्याय नमो नमः ॥१३॥ इज्याफल नमस्तुभ्यं नम इज्यादिशीलिने । नमः परमहंसाय नमः सत्त्वगुणाय च ॥ १४ ॥ स्थिताय परमव्योम्नि भूयो भूयो नमो नमः । संसारविषयावर्तसङ्कुले च महाभये ॥ १५ ॥ अपारे दुस्तरेऽगाधे पतितं कर्मभिः स्वकैः । अनाथमतिगंभीरं दयया परया हरे ॥ १६ ॥ मामुद्धर दयासिन्धो सिन्धोरस्मात्सुदुस्तरात् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ १७ ॥ तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु । नाहं हितं न जानामि त्वां व्रजाम्येव केवलम् ॥ १८ ॥ बुद्ध्वैवं नय गोविन्द मुक्त्युपायेन वर्त्मना । त्वमेव वेत्सि श्रेयो मे नेदमेतदितीति च । बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम् ॥ १९ ॥

षष्ठभागः ॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ १ ॥ श्रीमद्द्वारवतीनाथ वर्धतां विजयी भवान् । दिव्यं त्वदीयमैश्वर्यं निर्मर्यादविजृम्भितम् ॥ २ ॥ देवीभूषायुधैर्नित्यैर्मुक्तैर्मोक्षैकलक्षणैः । सत्योत्तरैस्त्वदीयैश्च सङ्गस्थाभिरसस्तव ॥ ३ ॥ प्राकारगोपुरवरप्रासादमणिमण्डपाः । शालिमुद्गतिलादीनां शाला शैलकुलोज्वला ॥ ४ ॥ रत्नकाञ्चनकौशेयक्षौमक्रमुकशालिकाः । शय्यागृहाणि पर्यङ्कवर्याः स्थूलासनानि च ॥ ५ ॥ कनत्कनकभृङ्गारपतद्ग्रहकलाचिकाः । छत्रचामरमुख्याश्च सन्तु नित्याः परिच्छदाः ॥ ६ ॥ अस्तु निस्तुलमव्यग्रं नित्यमभ्यर्चनं तव । पक्षे पक्षे विजृंभंतां मासि मासि महोत्सवाः ॥ ७ ॥ मणिकाञ्चनचित्राणि भूषणान्यंबराणि च । काश्मीरसारकस्तूरिकर्पूराद्यनुलेपनम् ॥ ८ ॥ कोमलानि च दामानि कौसुमैः सौरभोद्गमैः । धूपाः कर्पूरदीपाश्च सन्तु नित्याः परिच्छदाः ॥ ९ ॥ नृत्तगीतयुतं वाद्यं नित्यमत्र विवर्धताम् । श्रोत्रेषु नः सुधाधाराः कल्पंतां काहलस्वनाः ॥ १० ॥ कन्दमूलफलोदग्रं काले काले चतुर्विधम् । सूपापूपघृतक्षीरशर्करासहितं हविः ॥ ११ ॥ घनसारशिरोदग्रं क्रमुकाष्टदलान्वितम् । विमलानि च ताम्बूलदलानि स्वीकुरु प्रभो ॥ १२ ॥ प्रीतिभीतियुतो भूयान्नित्यं परिजनस्तव । भक्तिमन्तो हि भुंजन्तु पौरा जानपदैः सह ॥१३॥ धरणीधनरत्नानि वितरन्तु चिरं तव । कैंकर्यमखिलं सर्वे कुर्वन्तु क्षोणिपालकाः ॥ १४ ॥ प्रेमदिग्धदृशस्मेरं प्रेक्षमाणास्त्वदाननम् । महान्तः सन्ततं सन्तो मङ्गलानि प्रयुंजताम् । साममेवमवन्नित्यं पालयन् कुशलीभवान् ॥ १५ ॥ इति पाञ्चरात्रे जितं ते स्तोत्रं संपूर्णम् ॥

## ३२. मुकुंदमाला ।

श्रीगणेशाय नमः ॥ वंदे मुकुंदमरविंददलायताक्षं कुंदेंदुशंखदशनं शिशुगोपवेषम् । इंद्रादिदेवगणवंदितपादपीठं वृंदावनालयमहं वसुदेवसूनुम् ॥ १ ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुंठनकोविदेति । नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुंद ॥ २ ॥ जयतु जयतु देवो देवकीनंदनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्यामलः कोमलांगो जयतु जयतु पृथ्वीभारनाशो मुकुंदः ॥ ३ ॥ मुकुंद मूर्ध्ना प्रणिपत्य याचे भवंतमेकांतमियंतमर्थम् । अविस्मृतिस्त्वच्चरणारविंदे भवे भवे मेऽस्तु तव प्रसादात् ॥ ४ ॥ श्रीगोविंदपदांभोजमधुनो महदद्भुतम् । यत्पायिनो न मुंचंति मुंचंति यदपायिनः ॥ ५ ॥ नाहं वंदे तव चरणयोर्द्वंद्वमद्वंद्वहेतोः कुंभीपाकं गुरुमपि हरे नारकं नापनेतुम् । रम्यारामामृदुतनुलतानंदने नापि रंतुं भावे भावे हृदयभवने भावयेयं भवंतम् ॥ ६ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्भाव्यं तद्भवतु भगवन् पूर्वकर्मानुरूपम् । एतत्प्रार्थ्यं मम बहु मतं जन्मजन्मांतरेऽपि त्वत्पादांभोरुहयुगगता निश्चला भक्तिरस्तु ॥ ७ ॥ दिवि वा भुवि वा ममास्तु वासो नरके वा नरकांतक प्रकामम् । अवधीरितशारदारविंदौ चरणौ ते मरणेऽपि चिंतयामि ॥ ८ ॥ सरसिजनयने सशंखचक्रे मुरभिदि मा विरमेह चित्त रंतुम् । सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ ९ ॥ मा भैर्मंद मनो विचिंत्य बहुधा यामीश्चिरं यातना नैवामी प्रभवंति पापरिपवः स्वामी ननु श्रीधरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ १० ॥ भवजलधिगतानां द्वंद्ववाताहतानां सुतदुहितृ-

कलत्रत्राणभारार्दितानाम् । विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ ११ ॥ रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गगाणाम् । शरणमशरणानामेक एवातुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥ १२ ॥ अपराधसहस्रसंकुले पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ १३ ॥ मा मे स्त्रीत्वं मा च मे स्यात्कुभावो मा मूर्खत्वं मा कुदेशेषु जन्म । मिथ्या दृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवेयम् ॥ १४ ॥ कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वाऽनुसृतः स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायैव समर्पयामि ॥ १५ ॥ यत्कृतं यत्करिष्यामि तत्सर्वं न मया कृतम् । त्वया कृतं तु फलभुक् त्वमेव मधुसूदन ॥ १६ ॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मा स्म गाः कातरत्वम् । सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १७ ॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसंघाकुले च । संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्पादांभोजे वरद भवतो भक्तिभावं प्रदेहि ॥ १८ ॥ पृथ्वी रेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिंगो लघुस्तेजो निःश्वसनं मरुत्तनुतरं रंध्रं सुसूक्ष्मं नभः । क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा दृष्टा यत्र स तारको विजयते श्रीपादधूलीकणः ॥ १९ ॥ आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि । तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वंद्वांभोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २० ॥ आनंद गोविंद मुकुंद राम नारायणानंत निरामयेति । वक्तुं समर्थोऽपि न वक्ति कश्चिदहो

जनानां व्यसनानि मोक्षे ॥ २१ ॥ क्षीरसागरतरंगसीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ २२ ॥ इति श्रीकुलशेखरेण विरचिता मुकुंदमाला संपूर्णा ॥

## ३३. भगवच्छरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सच्चिदानंदरूपाय भक्तानुग्रहकारिणे । मायानिर्मितविश्वाय महेशाय नमो नमः ॥ १ ॥ रोगा हरंति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहंति चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीनबंधो ॥ २ ॥ देहो विनश्यति सदा परिणामशीलश्चित्तं च खिद्यति सदा विषयानुरागि । बुद्धिः सदा हि रमते विषयेषु नांतस्तस्मात्त्वमद्य शरणं मम दीनबंधो ॥ ३ ॥ आयुर्विनश्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः । वृद्धा प्रधावति यथा मृगराजपत्नी तस्मात्त्वमद्य शरणं मम दीनबंधो ॥ ४ ॥ आयाद्व्ययो मम भवत्यधिको विनीते कामादयो हि बलिनो विबलाः शमाद्याः । मृत्युर्यदा तुदति मां बत किं वदेयं तस्मात्त्व० ॥ ५ ॥ तप्तं तपो नहि कदापि मयेह तन्वा वाण्या तथा नहि कदापि तपश्च तप्तम् । मिथ्याभिभाषणपरेण न मानसं हि तस्मात्त्व० ॥ ६ ॥ स्तब्धं मनो मम सदा नहि याति सौम्यं चक्षुश्च मे न तव पश्यति विश्वरूपम् । वाचा तथैव न वदेन्मम सौम्यवाणीं तस्मात्त्व० ॥ ७ ॥ सत्त्वं न मे मनसि याति रजस्तमोभ्यां विद्धे तदा कथमहो शुभकर्मवार्ता । साक्षात्परंपरतया सुखसाधनं तत्तस्मात्त्वं० ॥ ८ ॥ पूजा कृता नहि कदापि मया त्वदीया मंत्रं त्वदीयमपि मे न जपेद्रसज्ञा । चित्तं न मे स्मरति ते चरणौ ह्यवाप्य तस्मात्त्व० ॥ ९ ॥ यज्ञो न मेऽस्ति

हुतिदानदयादियुक्तो ज्ञानस्य साधनगणो न विवेकमुख्यः। ज्ञानं क साधनगणेन विना क मोक्षस्तस्मात्त्व० ॥ १० ॥ सत्संगतिर्हि विदिता तव भक्तिहेतुः साऽप्यद्य नास्ति बत पंडितमानिनो मे। तामंतरेण नहि सा क च बोधवार्ता तस्मात्त्व० ॥ ११ ॥ दृष्टिर्न भूतविषया समताभिधाना वैषम्यमेव तदियं विषयीकरोति। शांतिः कुतो मम भवेत् समता न चेत्स्यात्तस्मात्त्व० ॥ १२ ॥ मैत्री समेषु न च मेऽस्ति कदापि नाथ दीने तथा न करुणा मुदिता च पुण्ये। पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मात्त्व० ॥ १३ ॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नांतर्मुखं भवति तामविहाय तस्य। क्कांतर्मुखत्वमपहाय सुखस्य वार्ता तस्मात्त्व० ॥ १४ ॥ त्यक्तं गृहाद्यपि मया भवतापशांत्यै नासीदसौ हृतहृदो मम मायया ते। सा चाधुना किमु विधास्यति नेति जाने तस्मात्त्व० ॥ १५ ॥ प्रासा धनं गृहकुटुंबगजाश्वदारा राज्यं यदैहिकमथेंद्रपुरश्च नाथ। सर्वं विनश्वरमिदं न फलाय कस्मै तस्मात्त्व० ॥ १६ ॥ प्राणान्निरुध्य विधिना न कृतो हि योगो योगं विनाऽस्ति मनसः स्थिरता कुतो मे। तां वै विना मम न चेतसि शांतिवार्ता तस्मात्त्व० ॥ १७ ॥ ज्ञानं यथा मम भवेत्कृपया गुरूणां सेवां तथा न विधिनाकरवं हि तेषाम्। सेवापि साधनतया विदितास्ति चित्ते तस्मात्त्व० ॥ १८ ॥ तीर्थादिसेवनमहाविधिना हि नाथ नाकारि येन मनसो मम शोधनं स्यात्। शुद्धिं विना न मनसोऽवगमापवर्गौ तस्मात्त्व० ॥ १९ ॥ वेदांतशीलनमपि प्रमितिं करोति ब्रह्मात्मनः प्रमितिसाधनसंयुतस्य। नैवास्ति साधनलवो मयि नाथ तस्मात्तस्मात्त्व० ॥ २० ॥ गोविंद शंकर हरे गिरिजेश मेश शंभो जनार्दन गिरीश मुकुंद साम्ब। नान्या गतिर्मम कथंचन वां विहाय तस्मात्प्रभो मम गतिः कृपया

विधेया ॥ २१ ॥ एतं स्तवं भगवदाश्रयणाभिधानं ये मानवाः प्रतिदिनं प्रणताः पठंति । ते मानवा भवरतिं परिभूय शांतिं गच्छंति किंच परमात्मनि भक्तिमन्तः ॥ २२ ॥ इति श्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मानंदविरचितं भगवच्छरणस्तोत्रं संपूर्णम् ॥

## ३४. परमेश्वरस्तुतिसारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ त्वमेकः शुद्धोऽसि त्वयि निगमबाह्यामलमयं प्रपंचं पश्यंति भ्रमपरवशाः पापनिरताः । बहिस्तेभ्यः कृत्वा स्वपदशरणं मानय विभो गजेंद्रे दृष्टं ते शरणद वदान्यं स्वपददम् ॥ १ ॥ न सृष्टेस्ते हानिर्यदि हि कृपयातोऽवसि च मां त्वयानेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे । अतो मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां न रिक्तां मे याञ्चां स्वजनरत कर्तुं भव हरे ॥ २ ॥ कदाऽहं भोः स्वामिन्नियतमनसा त्वां हृदि भजन्नभद्रे संसारे ह्यनवरतदुःखेऽतिविरसः । लभेयं तां शांतिं परममुनिभिर्या ह्यधिगता दयां कृत्वा मे त्वं वितर परशांतिं भवहर ॥ ३ ॥ विधाता चेद्विश्वं सृजति सृजतां मे शुभकृतिं विधुश्चेत्पाता माऽवतु जनिमृतेर्दुःखजलधेः । हरः संहर्ता हरतु मम शोकं सजनकं यथाऽहं मुक्तः स्यां किमपि तु तथा ते विदधताम् ॥ ४ ॥ अहं ब्रह्मानंदस्त्वमपि च तदाख्यः सुविदितस्ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुतिदृशा । तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं स्वमायां संवार्य प्रभव मम भेदं निरसितुम् ॥ ५ ॥ कदाऽहं हे स्वामिन् जनिमृतिमयं दुःखनिबिडं भवं हित्वा सत्येऽनवरतसुखे स्वात्मवपुषि । रमे तस्मिन्नित्यं निखिलमुनयो ब्रह्मरसिका रमंते यस्मिंस्ते कृतसकलकृत्या यतिवराः ॥६॥ पठंत्येके शास्त्रं निगममपरे तत्परतया यजंत्यन्ये

त्वां वै ददति च पदार्थांस्तव हितान् । अहं तु स्वामिंस्ते शरणमगमं संसृतिभयाद्यथा ते प्रीतिः स्याद्धितकर तथा त्वं कुरु विभो ॥ ७ ॥ अहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः श्रुतिः सिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि विधुतः । इति ज्ञाते तत्त्वे भवति च परः संसृतिलयादतस्तत्त्वज्ञानं मयि विघटयेस्त्वं हि कृपया ॥ ८ ॥ अनादौ संसारे जनिमृतिमये दुःखितमना मुमुक्षुः सन्कश्चिद्व्रजति हि गुरुं ज्ञानपरमम् । ततो ज्ञात्वा यं वै तुदति न पुनः क्लेशनिवहैर्भजेऽहं तं देवं भवति च परो यस्य भजनात् ॥९॥ विवेको वैराग्यं न च शमदमाद्याः षडपरे मुमुक्षा मे नास्ति प्रभवति कथं ज्ञानममलम् । अतः संसाराब्धेस्तरणसरणिं मामुपदिशन् स्वबुद्धिं श्रौतीं मे वितर भगवंस्त्वं हि कृपया ॥ १० ॥ कदाऽहं भो स्वामिन्निगममतिवेद्यं शिवमयं चिदानंदं नित्यं श्रुतिहृतपरिच्छेदनिवहम् । त्वमर्थाभिन्नं त्वामभिरम इहात्मन्यविरतं मनीषामेवं मे सफलय वदान्य स्वकृपया ॥ ११ ॥ यदर्थं सर्वं वै प्रियमसुधनादि प्रभवति स्वयं नान्यार्थो हि प्रिय इति च वेदे प्रविदितम् । स आत्मा सर्वेषां जनिमृतिमतां वेदगदितस्ततोऽहं तं वेद्यं सततममलं यामि शरणम् ॥ १२ ॥ मया त्यक्तं सर्वं कथमपि भवेत्स्वात्मनि मतिस्त्वदीया माया मां प्रति तु विपरीतं कृतवती । ततोऽहं किं कुर्यां नहि मम मतिः क्वापि चलति दयां कृत्वा नाथ स्वपदशरणं देहि शिवदम् ॥ १३ ॥ नगा दैत्याः कीशा भवजलधिपारं हि गमितास्त्वया चान्ये स्वामिन् किमिति समयेऽस्मिन् शयितवान् । न हेलां त्वं कुर्यास्त्वयि निहितसर्वे मयि विभो न हि त्वाऽहं हित्वा कमपि शरणं चान्यमगमम् ॥ १४ ॥ अनंताद्या विज्ञा न गुणजलधेस्तेऽन्तमगमन्नतः पारं यायात्तव गुणगणानां कथमयम् । गृणन्

यावद्धित्वा जनिमृतिहरं याति परमां गतिं योगिप्राप्यामिति मनसि बुद्ध्वाहमनवम् ॥ १५ ॥ इति श्रीमन्मौक्तिकरामोदासीन-शिष्यब्रह्मानंदविरचितं परमेश्वरस्तुतिसारस्तोत्रं संपूर्णम् ॥

## ३५. हरिनाममालास्तोत्रम् ।

श्रीगणेशाय नमः ॥ गोविंदं गोकुलानंदं गोपालं गोपिवल्लभम् । गोवर्धनोद्धरं धीरं तं वंदे गोमतीप्रियम् ॥ १ ॥ नारायणं निराकारं नरवीरं नरोत्तमम् । नृसिंहं नागनाथं च तं वंदे नरकांतकम् ॥ २ ॥ पीतांबरं पद्मनाभं पद्माक्षं पुरुषोत्तमम् । पवित्रं परमानंदं तं वंदे परमेश्वरम् ॥ ३ ॥ राघवं रामचंद्रं च रावणारिं रमापतिम् । राजीवलोचनं रामं तं वंदे रघुनंदनम् ॥ ४ ॥ वामनं विश्वरूपं च वासुदेवं च विठ्ठलम् । विश्वेश्वरं विभुं व्यासं तं वंदे वेदवल्लभम् ॥ ५ ॥ दामोदरं दिव्यसिंहं दयालुं दीननायकम् । दैत्यारिं देवदेवेशं तं वंदे देवकीसुतम् ॥ ६ ॥ मुरारिं माधवं मत्स्यं मुकुंदं मुष्टिमर्दनम् । मुंजकेशं महाबाहुं तं वंदे मधुसूदनम् ॥ ७ ॥ केशवं कमलाकांतं कामेशं कौस्तुभप्रियम् । कौमोदकीधरं कृष्णं तं वंदे कौरवांतकम् ॥ ८ ॥ भूधरं भुवनानंदं भूतेशं भूतनायकम् । भावनैकं भुजंगेशं तं वंदे भवनाशनम् ॥ ९ ॥ जनार्दनं जगन्नाथं जगज्जाड्यविनाशकम् । जामदग्न्यं वरं ज्योतिस्तं वंदे जलशायिनम् ॥ १० ॥ चतुर्भुजं चिदानंदं चाणूरमल्लमर्दनम् । चराचरगतं देवं तं वंदे चक्रपाणिनम् ॥ ११ ॥ श्रियः करं श्रियो नाथं श्रीधरं श्रीवरप्रदम् । श्रीवत्सलधरं सौम्यं तं वंदे श्रीसुरेश्वरम् ॥ १२ ॥ योगीश्वरं यज्ञपतिं यशोदानंददायकम् । यमुनाजलकल्लोलं तं वंदे यदुनायकम् ॥ १३ ॥ शालिग्रामशिलाशुद्धं शंखचक्रोपशोभितम् ।

सुरासुरसदासेव्यं तं वंदे साधुवल्लभम् ॥ १४ ॥ त्रिविक्रमं तपोमूर्तिं त्रिविधाघौघनाशनम् । त्रिस्थलं तीर्थराजेंद्रं तं वंदे तुलसीप्रियम् ॥ १५ ॥ अनंतमादिपुरुषमच्युतं च वरप्रदम् । आनंदं च सदानंदं तं वंदे चाघनाशनम् ॥ १६॥ लीलया धृतभूभारं लोकसत्त्वैकवंदितम् । लोकेश्वरं च श्रीकांतं तं वंदे लक्ष्मणप्रियम् ॥ १७ ॥ हरिं च हरिणाक्षं च हरिनाथं हरिप्रियम् । हलायुधसहायं च तं वंदे हनुमत्पतिम् ॥ १८ ॥ हरिनामकृता माला पवित्रा पापनाशिनी । बलिराजेंद्रेण चोक्ता कंठे धार्या प्रयत्नतः ॥ १९ ॥ इति बलिराजेंद्रप्रणीतं हरिनाममालास्तोत्रं संपूर्णम् ॥

## २६. विष्णुशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारद उवाच ॥ ॐवासुदेवं हृषीकेशं वामनं जलशायिनम् । जनार्दनं हरिं कृष्णं श्रीवक्षं गरुडध्वजम् ॥ १ ॥ वाराहं पुंडरीकाक्षं नृसिंहं नरकांतकम् । अव्यक्तं शाश्वतं विष्णुमनंतमजमव्ययम् ॥ २ ॥ नारायणं गदाध्यक्षं गोविंदं कीर्तिभाजनम् । गोवर्धनोद्धरं देवं भूधरं भुवनेश्वरम् ॥ ३ ॥ वेत्तारं यज्ञपुरुषं यज्ञेशं यज्ञवाहकम् । चक्रपाणिं गदापाणिं शंखपाणिं नरोत्तमम् ॥ ४ ॥ वैकुंठं दुष्टदमनं भूगर्भं पीतवाससम् । त्रिविक्रमं त्रिकालज्ञं त्रिमूर्तिं नंदकेश्वरम् ॥ ५ ॥ रामं रामं हयग्रीवं भीमं रौद्रं भवोद्भवम् । श्रीपतिं श्रीधरं श्रीशं मंगलं मंगलायुधम् ॥ ६ ॥ दामोदरं दमोपेतं केशवं केशिसूदनम् । वरेण्यं वरदं विष्णुमानंदं वसुदेवजम् ॥ ७ ॥ हिरण्यरेतसं दीप्तं पुराणं पुरुषोत्तमम् । सकलं निष्कलं शुद्धं निर्गुणं गुणशाश्वतम् ॥ ८ ॥ हिरण्यतनुसंकाशं सूर्यायुतसमप्रभम् । मेघश्यामं चतुर्बाहुं कुशलं कमलेक्षणम् ॥ ९ ॥ ज्योती-

रूपसरूपं च स्वरूपं रूपसंस्थितम् । सर्वज्ञं सर्वरूपस्थं सर्वेशं सर्वतोमुखम् ॥ १० ॥ ज्ञानं कूटस्थमचलं ज्ञानदं परमं प्रभुम् । योगीशं योगनिष्णातं योगिनं योगरूपिणम् ॥ ११ ॥ ईश्वरं सर्वभूतानां वंदे भूतमयं प्रभुम् । इति नामशतं दिव्यं वैष्णवं खलु पापहम् ॥ १२ ॥ व्यासेन कथितं पूर्वं सर्वपापप्रणाशनम् । यः पठेत्प्रातरुत्थाय स भवेद्वैष्णवो नरः ॥ १३ ॥ सर्वपापविशुद्धात्मा विष्णुसायुज्यमाप्नुयात् । चांद्रायणसहस्राणि कन्यादानशतानि च ॥ १४ ॥ गवां लक्षसहस्राणि मुक्तिभागी भवेन्नरः । अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः ॥ १५ ॥ इति श्रीविष्णुपुराणे विष्णुशतनामस्तोत्रं संपूर्णम् ॥

## ३७. शालिग्रामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशालिग्रामस्तोत्रमंत्रस्य श्रीभगवानृषिः, नारायणो देवता, अनुष्टुप् छंदः, श्रीशालिग्रामस्तोत्रमंत्रजपे विनियोगः । युधिष्ठिर उवाच ॥ श्रीदेवदेव देवेश देवतार्चनमुत्तमम् । तत्सर्वं श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम ॥ १ ॥ श्रीभगवानुवाच ॥ गंडक्यां चोत्तरे तीरे गिरिराजस्य दक्षिणे । दशयोजनविस्तीर्णा महाक्षेत्रवसुंधरा ॥ २ ॥ शालिग्रामो भवेद्देवो देवी द्वारावती भवेत् । उभयोः संगमो यत्र मुक्तिस्तत्र न संशयः ॥ ३ ॥ शालिग्रामशिला यत्र यत्र द्वारावती शिला । उभयोः संगमो यत्र मुक्तिस्तत्र न संशयः ॥ ४ ॥ आजन्मकृतपापानां प्रायश्चित्तं यं इच्छति । शालिग्रामशिलावारि पापहारि नमोऽस्तु ते ॥ ५ ॥ अकालमृत्युहरणं सर्वव्याधिविनाशनम् । विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥ ६ ॥ शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि । अंगलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत् ॥ ७ ॥

स्नानोदकं पिबेन्नित्यं चक्रांकितशिलोद्भवम् । प्रक्षाल्य शुद्धं तत्तोयं ब्रह्महत्यां व्यपोहति ॥ ८ ॥ अग्निष्टोमसहस्राणि वाजपेयशतानि च । सम्यक् फलमवाप्नोति विष्णोर्नैवेद्यभक्षणात् ॥ ९ ॥ नैवेद्ययुक्तां तुलसीं च मिश्रितां विशेषतः पादजलेन विष्णोः । योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ १० ॥ खंडिता स्फुटिता भिन्ना वह्निदग्धा तथैव च । शालिग्रामशिला यत्र तत्र दोषो न विद्यते ॥ ११ ॥ न मंत्रः पूजनं नैव न तीर्थं न च भावना । न स्तुतिर्नोपचारश्च शालिग्रामशिलार्चने ॥ १२ ॥ ब्रह्महत्यादिकं पापं मनोवाक्कायसंभवम् । शीघ्रं नश्यति तत्सर्वं शालिग्रामशिलार्चनात् ॥ १३ ॥ नानावर्णमयं चैव नानाभोगेन वेष्टितम् । तथा वरप्रसादेन लक्ष्मीकांतं वदाम्यहम् ॥ १४ ॥ नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा । तथा वरप्रसादेन लक्ष्मीकांतं वदाम्यहम् ॥ १५ ॥ कृष्णे शिलातले यत्र सूक्ष्मं चक्रं च दृश्यते । सौभाग्यं संततिं धत्ते सर्वसौख्यं ददाति च ॥ १६ ॥ वासुदेवस्य चिह्नानि दृष्ट्वा पापैः प्रमुच्यते । श्रीधरः सुकरे वामे हरिद्वर्णस्तु दृश्यते ॥ १७ ॥ वराहरूपिणं देवं कूर्मांगैरपि चिह्नितम् । गोपदं तत्र दृश्येत वाराहं वामनं तथा ॥ १८ ॥ पीतवर्णं तु देवानां रक्तवर्णं भयानकम् । नारसिंहोऽभवद्देवो मोक्षदं च प्रकीर्तितम् ॥ १९ ॥ शंखचक्रगदाकूर्माः शंखो यत्र प्रदृश्यते । शंखवर्णस्य देवानां वामे देवस्य लक्षणम् ॥ २० ॥ दामोदरं तथा स्थूलं मध्ये चक्रं प्रतिष्ठितम् । पूर्णद्वारेण संकीर्णा पीतरेखा च दृश्यते ॥ २१ ॥ छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः । कपटे च महादुःखं शूलाग्रे तु रणं ध्रुवम् ॥ २२ ॥ ललाटे शेषभोगस्तु शिरोपरि सुकांचनम् । चक्रकांचनवर्णानां वामदेवस्य लक्षणम् ॥ २३ ॥ वामपार्श्वे च वै चक्रे

कृष्णवर्णस्तु पिंगलम् । लक्ष्मीनृसिंहदेवानां पृथग्वर्णस्तु दृश्यते ॥ २४ ॥ लंबोष्ठे च दरिद्रं स्यात्पिंगले ह्यानिरेव च । लग्नचक्रे भवेद्व्याधिर्विदारे मरणं ध्रुवम् ॥ २५ ॥ पादोदकं च निर्माल्यं मस्तके धारयेत्सदा । विष्णोर्दृष्टं भक्षितव्यं तुलसीदलमिश्रितम् ॥ २६ ॥ कल्पकोटिसहस्राणि वैकुंठे वसते सदा । शालिग्रामशिलाबिंदुर्हत्याकोटिविनाशनः ॥ २७ ॥ तस्मात्संपूजयेद्ध्यात्वा पूजितं चापि सर्वदा । शालिग्रामशिलास्तोत्रं यः पठेच्च द्विजोत्तमः ॥ २८ ॥ स गच्छेत्परमं स्थानं यत्र लोकेश्वरो हरिः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ २९ ॥ दशावतारा देवानां पृथग्वर्णस्तु दृश्यते । ईप्सितं लभते राज्यं विष्णुपूजामनुक्रमात् ॥ ३० ॥ कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः । ताः सर्वा नाशमायांति विष्णुनैवेद्यभक्षणात् ॥ ३१ ॥ विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् । तस्मादष्टगुणं पापं भूमौ बिंदुनिपातनात् ॥ ३२ ॥ इति श्रीशालिग्रामस्तोत्रं संपूर्णम् ॥

## ३८. विष्णुपादादिकेशांतवर्णनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं नीलाद्रेस्तुंगशृंगस्थितमिव रजनीनाथबिम्बं विभाति । पायान्नः पांचजन्यः स सकुलदितिजत्रासनैः पूरयन्स्वैर्निध्वानैर्नीरदौघध्वनिपरिभवदैरंबरं कंबुराजः ॥ १ ॥ आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं ध्वांतस्यैकांतमंतं यदपि च परमं सर्वधाम्नां च धाम । चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं शश्वन्नो विश्ववंद्यं वितरतु विपुलं शर्म घर्मांशुशोभम् ॥ २ ॥

---

१ अस्य टीका काव्यमालाया द्वितीयगुच्छके द्रष्टव्या ।

भव्याब्धिर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्तेरस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः । सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविस्फारनादः संयत्कल्पांतसिंधौ शरसलिलघटावार्मुचः कार्मुकस्य ॥ ३ ॥ जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयंती युद्धेषूद्धूयमाना झटिति तडिदिवालक्ष्यते यस्य मूर्तिः । सोऽसिस्त्रासाकुलाक्षत्रिदशवपुरिपुः शोणितास्वाददृप्तो नित्यानंदाय भूयान्मधुमथनमनोनंदको नंदको नः ॥ ४ ॥ कन्त्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता सम्यग्वृत्ता स्थिताग्रे सपदि न सहते दर्शनं या परेषाम् । राजंती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा कामं दीप्तांशुकांता प्रदिशतु दयितेवास्य कौमोदकी नः ॥ ५ ॥ यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो यं संचिंत्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतंति । चंचच्चंडोरुतुंडत्रुटितफणिवसारक्तपंकांकितास्यं वंदे छंदोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥ ६ ॥ विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता सोऽनंतः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः । पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहंता सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥ ७ ॥ वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः । कुंदेंदुस्वच्छमंदस्मितमधुरमुखांभोरुहां सुंदरांगीं वंदे वंद्यामशेषैरपि मुरभिदुरोमंदिरामिंदिरां ताम् ॥ ८ ॥ या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो धत्ते या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् । धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥ ९ ॥ येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु

त्यज्यते दैत्यवर्गैर्येभ्यो धर्तुं च मूर्ध्नां स्पृहयति सततं सर्वगीर्वाणवर्गः । नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः पद्माक्षस्याङ्घ्रिपद्मद्वयतलनिलयाः पांसवः पापपंकम् ॥ १० ॥ रेखा लेखाभिवंद्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षामसूत्रायमाणाः । दद्युर्नो मंगलानि भ्रमरभरजुषा कोमलेनाब्धिजायाः कम्रेणाम्रेड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ॥ ११ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदंडायमानादाश्च्योतंती बभासे सुरसरिदमला वैजयंतीव कांता । भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तंभशोभां दधानः पातामेतौ पयोजोदरललिततलौ पंकजाक्षस्य पादौ ॥ १२ ॥ आक्रामन्त्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ याभ्यां वैरोचनींद्रौ युगपदपि विपत्संपदोरेकधाम । ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्यांचिताभ्यामुभाभ्यां प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपंकेरुहाभ्याम् ॥ १३ ॥ येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्रजानां साहस्री चापि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम् । व्याप्ता विश्वंभरा यैरतिविततनोर्विश्वमूर्तेर्विराजो विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वंघ्रिपंकेरुहेभ्यः ॥ १४ ॥ विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या राजीवस्येव रम्या हिमजलकणिकालंकृताग्रा दलाली । अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थनीयानि सेयं दद्यादाद्यानवद्या ततिरतिरुचिरा मंगलान्यंगुलीनाम् ॥ १५ ॥ यस्यां दृष्ट्वाऽमलायां प्रतिकृतिममराः स्वां भवंत्यानमंतः सेंद्राः सांद्रीकृतेर्ष्याः स्वपरसुरकुलाशंकयातंकवंतः । सा सद्यः सातिरेकां सकलसुखकरीं संपदं साधयेन्नश्चंचच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली ॥ १६ ॥ पादांभोजन्मसेवासमवनतसुरव्रातभास्व-

त्किरीटप्रत्युप्तोच्चावचाश्मप्रवरकरगणैश्चित्रितं यद्विभाति । नम्रांगाणां हरेर्नो हरिदुपलमहाकूर्मसौंदर्यहारिच्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमंतम् ॥ १७ ॥ श्रीमत्यौ चारुवृत्ते करपरिमलनानंदहृष्टे रमायाः सौंदर्याढ्येंद्रनीलोपलरचितमहादंडयोः कांतिचौरे । सूरींद्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसंघे जंघे नारायणीये मुहुरपि जयतामस्मदंहो हरंत्यौ ॥ १८ ॥ सम्यक्साह्यं विधातुं सममपि सततं जंघयोः खिन्नयोर्ये भारीभूतोरुदंडद्वयभरणकृतोत्तंभभावं भजेते । चित्तादर्शं निधातुं महितमिव सतां ते समुद्गायमाने वृत्ताकारे विधत्तां हृदि मुदमजितस्यानिशं जानुनी नः ॥ १९ ॥ देवो भीतिं विधातुः सपदि विदधतो कैटभाख्यं मधुं चावारोप्यारूढगर्वावधिजलधि ययोरेव दैत्यौ जघान । वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीलावूरू चारू हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम् ॥ २० ॥ पीतेन द्योतते यच्चतुरपरिहितेनांबरेणात्युदारं जातालंकारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः । एतत्पातित्यदाम्नो जघनमतिघनादेनसो माननीयं सातत्येनैव चेतोविषयमवतरत्पातु पीतांबरस्य ॥ २१ ॥ यस्या दाम्न्या त्रिधाम्नो जघनकलितया भ्राजतेऽङ्गं यथाब्धेर्मध्यस्थो मंदराद्रिर्भुजगपतिमहाभोगसंनद्धमध्यः । कांची सा कांचनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता कल्यां कल्याणदात्रीं मम मतिमनिशं कम्ररूपा करोतु ॥ २२ ॥ उन्नम्रं कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रैः पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् । तस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुध्या नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥ २३ ॥ पातालं यस्य नालं वलयमपि दिशां पत्रपंक्तिं नगेंद्रान्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां

स्वर्णशैलम् । भूयाद्भूयस्त्वयं भूमधुकरभवनं भूमयं कामदं नो नालीकं नाभिपद्माकरभवमुरु तन्नागशब्दस्य शौरेः ॥ २४ ॥ कांत्यंभःपूरपूर्णे लसदसितवलीभंगभास्वत्तरंगे गंभीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे । क्रीडत्वानद्धहेमोदरनलिनमहावाडवाग्निप्रभाढ्ये कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥ २५ ॥ नाभीनालीकमूलादधिकपरिमलोन्मोहितानामलीनां माला नीलेव यांती स्फुरति रुचिमती वक्षपद्मोन्मुखी या । रम्या सा रोमराजिर्मेहितरुचिमती मध्यभागस्य विष्णोश्चित्तस्था मा विरंसीच्चिरतरमुचितां साधयंती श्रियं नः ॥ २६ ॥ आदौ कल्पस्य यस्मात्प्रभवति नियतं विश्वमेतद्विकल्पैः कल्पांते यस्य चांतः प्रविशति सकलं स्थावरं जंगमं च । अत्यंताचिंत्यमूर्तेश्चिरतरमजितस्यांतरिक्षस्वरूपे तस्मिन्नस्माकमंतःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥ २७ ॥ संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं श्रीवत्सोल्लासि फुल्लप्रतिवनवनमालांशुराजद्भुजांतम् । वक्षः श्रीवृक्षकांतं मधुकरनिकरश्यामलं शार्ङ्गपाणेः संसाराध्वश्रमांतैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥ २८ ॥ कांतं वक्षो नितांतं विदधदिव गलं कालिमा कालशत्रोरिंदोर्बिम्बं यथांको मधुप इव तरोर्मंजरीं राजते यः । श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैः श्रियं नः ॥ २९ ॥ संभूयांभोधिमध्यात्सपदि सहजया यः श्रिया संनिधत्ते नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये । आशाः सर्वाः प्रकाशा विदधदपिदधच्चात्मभासान्यतेजांस्याश्चर्यस्याकरो नो द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै ॥ ३० ॥ या वायावानुकूल्यात्सरति मणिरुचा भासमाना समाना साकं साकंपमंसे वसति विदधती वासुभद्रं सुभद्रम् । सारं सारंगसंघैर्मुखरित-

कुसुमा मेचकांता च कांता माला मालालितास्मान्न विरमतु सुखैर्यो-
जयंती जयंती ॥ ३१ ॥ हारस्योरुप्रभाभिः प्रतिवनवनमालांशुभिः
प्रांशुभिर्यच्छ्रीभिश्चाप्यंगदानां शबलितरुचिभिर्निष्कभाभिश्च भाति।
बाहुल्येनैव बद्धांजलिपुटमजितस्याभियाचामहे तद्वंधार्ति बाधतां नो
बहुविहतकरीं बंधुरं बाहुमूलम् ॥ ३२ ॥ विश्वत्राणैकदीक्षास्तदनु-
गुणगुणक्षत्रनिर्माणदक्षाः कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणा-
मद्भुतानाम् । शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशंखौ सहस्रं
बिभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो मोहहानिम् ॥ ३३ ॥
कंठाकल्पोद्गतैर्यः कनकमयलसत्कुंडलोस्रैरुदारैरुद्द्योतैः कौस्तुभस्या-
प्युरुभिरुपचितश्चित्रवर्णो विभाति । कंठाश्लेषे रमायाः करवलयपदै-
र्मुद्रिते भद्ररूपे वैकुंठीयेऽत्र कंठे वसतु मम मतिः कुंठभावं विहाय
॥ ३४ ॥ पद्मानंदप्रदाता परिलसदरुणश्रीपरीताग्रभागः काले काले
च कंबुप्रवरशशधरापूरणे यः प्रवीणः । वक्त्राकाशांतरस्थस्तिरयति
नितरां दंततारौघशोभां श्रीभर्तुर्दंतवासोद्युमणिरवतमोनाशनायास्त्व-
सौ नः ॥ ३५ ॥ नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमा
या वक्त्रेंदोरंतराले कृतवसतिरिवाभाति नक्षत्रराजिः । लक्ष्मीकांतस्य
कांताकृतिरतिविलसन्मुग्धमुक्ताफलश्रीर्दंताली संततं सा नतिनुति-
निरतान्रक्षतादक्षता नः ॥ ३६ ॥ ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे
देव संभावये त्वां शंभो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः
सुखं वः । इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्न-
स्यास्येंदोरास्रवंती वरवचनसुधा ह्लादयेन्मानसं नः ॥ ३७ ॥ कर्ण-
स्थस्वर्णकम्रोज्ज्वलमकरमहाकुंडलप्रोतदीप्यन्माणिक्यश्रीप्रतानैः परि-
मिलितमलिश्यामलं कोमलं यत् । प्रोद्यत्सूर्यांशुराजन्मरकतमुकुरा-
कारचोरं मुरारेर्गाढामागामिनीं नो गमयतु विपदं गंडयोर्मंडलं

तत् ॥ ३८ ॥ वक्त्रांभोजे लसंतं मुहुरधरमणिं पक्वबिंबाभिरामं दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुंडदंडायते नः । घोणः शोणीकृतात्मा श्रवणयुगलसत्कुंडलोस्रैर्मुरारेः प्राणाख्यस्यानिलस्य प्रसरणसरणिः प्राणदानाय नः स्तात् ॥ ३९ ॥ दिक्कालौ वेदयंतौ जगति मुहुरिमौ संचरंतौ रवींदू त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनींद्राः। अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥ ४० ॥ लक्ष्माकारालकालिस्फुरदलिकशशांकार्धसंदर्शमीलन्नेत्रांभोजप्रबोधोत्सुकनिभृततरालीनभृंगच्छदाभे । लक्ष्मीनाथस्य लक्षीकृतविबुधगणापांगबाणासनार्धच्छाये नो भूतिभूरिप्रसवकुलशते भ्रूलते पालयेताम् ॥ ४१ ॥ पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसंघाः । नृत्यल्लालाटरंगे रजनिकरतनोरर्धखंडावदाते कालव्यालद्वयं वा विलसति समया बालिका मातरं नः ॥ ४२ ॥ रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्षप्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिंगम् । भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वंद्वमध्यादुत्थं तत्पुंड्रमूर्ध्वं जनिमरणतमःखंडनं मंडनं च ॥ ४३ ॥ पीठीभूतालकांते कृतमुकुटमहादेवलिंगप्रतिष्ठे लालाटे नाट्यरंगे विकटतरतटे कैटभारेश्चिराय । प्रोद्घाट्यैवात्मतंद्रीप्रकटपटकुटीं प्रस्फुरंतीं स्फुटांगं पट्वीयं भावनाख्यां चटुलमतिनटी नाटिकां नाटयेन्नः ॥ ४४ ॥ मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुंतलाली कालिंद्यारुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु । राहुर्वा याति वक्त्रं सकलशशिकलाभ्रांतिलोलांतरात्मा लोकैरालोच्यते या प्रदिशतु सकलैः साऽखिलं मंगलं नः ॥ ४५ ॥ सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपा व्याप्तव्योमांतरालास्तरलरुचि-

जलारंजिताः स्पष्टभासः । देहच्छायोद्गमाभारिपुवपुरगुरुप्लोषरोषाग्नि-
धूम्याः केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥४६॥
यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिःप्रतानस्फूर्त्या मूर्तिर्मुरारेर्द्युमणि-
शतचितव्योमवद्दुर्निरीक्ष्या । कुर्वत्पारेपयोधि ज्वलदकृतमहाभास्व-
दौर्वाग्निशंकां शश्वन्नः शर्म दिश्यात्कलिकलुषतमःपाटनं तत्कि-
रीटम् ॥ ४७ ॥ भ्रांत्वा भ्रांत्वा यदंतस्त्रिभुवनगुरुरप्यब्दकोटीरनेका
गंतुं नांतं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् । उन्मज्ज-
न्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं देहांभोभिः स देयान्निर-
वधिरमृतं दैत्यविद्वेषिणो नः ॥ ४८ ॥ मत्स्यः कूर्मो वराहो नरहरि-
णपतिर्वामनो जामदग्न्यः काकुत्स्थः कंसघाती मनसिजविजयी यश्च
कल्की भविष्यन् । विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थाप-
नार्थाः पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥ ४९ ॥
यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणाः स्वार्था-
लाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः । नित्यानंदं स्वसंविन्निर-
वधिममृतं स्वांतसंक्रांतबिंबच्छायापत्यापि नित्यं सुखयति यमिनो
यस्तदव्यान्महो नः ॥ ५० ॥ आ पादादा च शीर्ष्णो वपुरिदमनघं
वैष्णवं यः स्वचित्ते धत्ते नित्यं निरस्ताखिलकलिकलुषे संततांतः-
प्रमोदः । जुह्वज्जिह्वाकृशानौ हरिचरितहविःस्तोत्रमंत्रानुपाठैस्तत्पादां-
भोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥ ५१ ॥ इति भग-
वत्पादश्रीशंकराचार्यकृतं विष्णुपादादिकेशान्तवर्णनस्तोत्रं समाप्तम् ॥

## २९. विष्णोरष्टाविंशतिनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अर्जुन उवाच ॥ किं नु नामसहस्राणि जपंते
च पुनः पुनः । यानि नामानि दिव्यानि तानि चाचक्ष्व केशव

॥ १ ॥ श्रीभगवानुवाच ॥ मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम् । गोविंदं पुंडरीकाक्षं माधवं मधुसूदनम् ॥ २ ॥ पद्मनाभं सहस्राक्षं वनमालिं हलायुधम् । गोवर्धनं हृषीकेशं वैकुंठं पुरुषोत्तमम् ॥ ३ ॥ विश्वरूपं वासुदेवं रामं नारायणं हरिम् । दामोदरं श्रीधरं च वेदांगं गरुडध्वजम् ॥ ४ ॥ अनंतं कृष्णगोपालं जपतो नास्ति पातकम् । गवां कोटिप्रदानस्य अश्वमेधशतस्य च ॥ ५ ॥ कन्यादानसहस्राणां फलं प्राप्नोति मानवः । अमायां वा पौर्णमास्यामेकादश्यां तथैव च ॥ ६ ॥ संध्याकाले स्मरन्नित्यं प्रातःकाले तथैव च । मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥ इति श्रीकृष्णार्जुनसंवादे विष्णोरष्टाविंशतिनामस्तोत्रं संपूर्णम् ॥

## ४०. अच्युतनामाष्टकम् ।

श्रीगणेशाय नमः ॥ अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् । हंसं नारायणं चैवमेतन्नामाष्टकं पठेत् ॥ १ ॥ त्रिसंध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति । शत्रुसैन्यं क्षयं याति दुःस्वप्नः सुखदो भवेत् ॥ २ ॥ गंगायां मरणं चैव दृढा भक्तिस्तु केशवे । ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः ॥ ३ ॥ इति श्रीवामनपुराणे विष्णोर्नामाष्टकस्तोत्रं संपूर्णम् ॥

## ४१. श्रीविष्णोः षोडशनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम् । शयने पद्मनाभं च विवाहे च प्रजापतिम् ॥ १ ॥ युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम् । नारायणं तनुत्यागे श्रीधरं प्रियसंगमे ॥ २ ॥ दुःस्वप्ने स्मर गोविन्दं संकटे मधुसूदनम् । कानने नारसिंहं च पावके जलशायिनम् ॥ ३ ॥ जलमध्ये वराहं च पर्वते

रघुनन्दनम् । गमने वामनं चैव सर्वकार्येषु माधवम् ॥ ४ ॥ षोडशैतानि नामानि प्रातरुत्थाय यः पठेत् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ५ ॥ इति श्रीविष्णोः षोडशनामस्तोत्रं संपूर्णम् ॥

## ४२. हरिमीडेस्तोत्रम् ।

श्रीगणेशाय नमः ॥ स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् । यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥ १ ॥ यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम् । येन व्याप्तं येन विबुद्धं सुखदुःखैस्तं संसार० ॥ २ ॥ सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानन्दोऽनन्तगुणो यो गुणधामा । यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यस्तं संसार० ॥ ३ ॥ यस्मादन्यन्नास्त्यपि नैवं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात् । ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञस्तं संसार० ॥ ४ ॥ आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना । भक्त्यैकाग्रध्यानपरा यं विदुरीशं तं संसार० ॥ ५ ॥ प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य । क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसार० ॥ ६ ॥ यं ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् । ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं तं संसार० ॥ ७ ॥ मात्रातीतं स्वात्मविकाशात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम् । भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसार० ॥ ८ ॥ यद्यद्वेद्यं वस्तुसतत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च । ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसार० ॥ ९ ॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य । तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥ १० ॥ हित्वा हित्वा

दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभम् । त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्तास्तं संसार० ॥ ११ ॥ सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति हि सर्वः । सर्वत्रान्तर्यामितयेत्थं यमनन्यस्तं संसार० ॥ १२ ॥ सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतद्दृष्ट्वाऽऽत्मानं चैवमजं सर्वजनेषु । सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं तं संसार० ॥ १३ ॥ सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते स्प्रष्टा श्रोता बुध्यति चेत्याहुरिमं यम् । साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार० ॥ १४ ॥ पश्यञ्शृण्वन्नत्र विजानन् रसयन् सन् जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम् । इत्यात्मानं यं विदुरीशं विषयज्ञं तं संसार० ॥ १५ ॥ जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम् । इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये तं संसार० ॥ १६ ॥ पश्यञ्शुद्धोऽप्यक्षर एको गुणभेदान्नानाकारान् स्फाटिकवद्भाति विचित्रः । भिन्नश्छिन्नश्चायमजः कर्मफलैर्यस्तं संसार० ॥ १७ ॥ ब्रह्माविष्णू रुद्रहुताशौ रविचंद्राविन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य । एकं सन्तं यं बहुधाऽऽहुर्मतिभेदात्तं संसार० ॥ १८ ॥ सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कलमानन्दमनन्यम् । इत्याहादौ यं वरुणोऽसौ भृगवेऽजं तं संसार० ॥ १९ ॥ कोशानेतान्पञ्च रसादीनतिहाय ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थः । पित्रादिष्टो वेद भृगुर्यं यजुरन्ते तं संसार० ॥ २० ॥ येनाविष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः । कर्ता भोक्तात्माऽत्र हि चिच्छक्त्यधिरूढस्तं संसार० ॥ २१ ॥ सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम् । सच्च त्यच्चाभूत् परमात्मा स य एकस्तं संसार० ॥ २२ ॥ वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्त्वत

तत्रैश्च यमीशम् । दृष्ट्वाऽथान्तश्चेतसि बुद्ध्वा विविशुर्यं तं संसार०
॥ २३ ॥ श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्यो देव इहैवाशु
य ईशः । दुर्विज्ञेयो जन्मशतैश्चापि विना तैस्तं संसार० ॥ २४ ॥
यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुति-
विद्भिः । तज्जादित्वादब्धितरंगभ्रमभिन्नं तं संसार० ॥ २५ ॥
दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं भक्त्या गुर्व्या लभ्य हृदिस्थं दृशि-
मात्रम् । ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार० ॥ २६ ॥
क्षेत्रज्ञत्वं प्राप्य विभुः पंचमुखैर्यो भुंक्तेऽजस्रं भोग्यपदार्थान्प्र-
कृतिस्थः । क्षेत्रे क्षेत्रेऽप्स्विन्दुवदेको बहुधाऽऽस्ते तं संसार० ॥ २७ ॥
युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञांतरविद्भिः
पुरुषाख्यः । योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसार०
॥ २८ ॥ एकीकृत्यानेकशरीरस्थमिमं ज्ञं यं विज्ञायेहैव स एवाशु
भवन्ति । यस्मिँल्लीना नेह पुनर्जन्म लभन्ते तं संसार० ॥ २९ ॥
द्वंद्वैकत्वं यच्च मधुब्राह्मणवाक्यैः कृत्वा शक्रोपासनमासाद्य
विभूत्या । योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं तं संसार०
॥ ३० ॥ योऽयं देहे चेष्टयिताऽन्तःकरणस्थः सूर्ये चासौ तापयिता
सोऽस्म्यहमेव । इत्यात्मैक्योपासनया यं विदुरीशं तं संसार०
॥ ३१ ॥ विज्ञानांशो यस्य सतः शक्त्यधिरूढो बुद्धिर्बुध्यत्यत्र
बहिर्बोध्यपदार्थान् । नैवांतःस्थं बुध्यति यं बोधयितारं तं संसार०
॥ ३२ ॥ कोऽयं देहे देव इतीत्थं सुविचार्यं ज्ञाता श्रोतानन्द-
यिता चैष हि देवः । इत्यालोच्य ज्ञांश इहास्मीति विदुर्यं तं
संसार० ॥ ३३ ॥ को ह्येवान्यादात्मनि न स्यादयमेष ह्येवानन्दः
प्राणिति चापानिति चेति । इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा तं
संसार० ॥ ३४ ॥ प्राणो वाऽहं वाक्श्रवणादीनि मनो वा बुद्धिर्वाऽहं

व्यस्त उताहोऽपि समस्तः । इत्यालोच्य ज्ञसिरिहास्तीति विदुर्यं तं संसार० ॥ ३५ ॥ नाहं प्राणो नैव शरीरं न मनोऽहं नाहं बुद्धिर्नाहमहंकारधियौ च । योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥ ३६ ॥ सत्तामात्रं केवलविज्ञानमजं सत्सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय । साम्नामंते प्राह पिता यं विभुमाद्यं तं संसार० ॥ ३७ ॥ मूर्तामूर्ते पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेति च नेतीति विहाय । चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं तं संसार० ॥ ३८ ॥ ओतं प्रोतं यत्र च सर्वं गगनान्तं यो स्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः । ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यस्तं संसार० ॥ ३९ ॥ तावत्सर्वं सत्यमिवाभाति यदेतद्यावत्सोऽसीत्यात्मनि यो ज्ञो न हि दृष्टः । दृष्टे तस्मिन्सर्वमसत्यं भवतीदं तं संसार० ॥ ४० ॥ रागामुक्तं लोहयुतं हेम यथाऽग्नौ योगाष्टाङ्गैरुज्वलितज्ञानमयाग्नौ । दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार० ॥ ४१ ॥ यं विज्ञानज्योतिषमाद्यं सुविभातं हृद्यर्केन्द्वग्न्योकसमीड्यं तडिदाभम् । भक्त्याराध्येहैव विशंत्यात्मनि सन्तं तं संसार० ॥ ४२ ॥ पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो भक्त्या स्तौतीत्याङ्गिरसं बिष्णुरिमं माम् । इत्यात्मानं स्वात्मनि संहृत्य सदैकस्तं संसार० ॥ ४३ ॥ इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वांतार्काभं भगवत्पादीयमिदं यः । विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः ॥ ४४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ हरिमीडेस्तोत्रं समाप्तम् ॥

## ४३. श्रीविष्णुमहिम्नः स्तोत्रम् ।

श्रीगणेशाय नमः ॥ महिम्नस्ते पारं विधिहरफणीन्द्रप्रभृतयो विदुर्नाद्याप्यज्ञश्चलमतिरहं नाथ नु कथम् । विजानीयामद्धा नलिन-

नयनात्मीयवचसो विशुद्ध्यै वक्ष्यामीषदपि तु तथापि स्वमतितः ॥१॥ यदाहुर्ब्रह्मैके पुरुषमितरे कर्म च परेऽपरे बुद्धं चान्ये शिवमपि च धातारमपरे । तथा शक्तिं केचिद्गणपतिमुतार्कं च सुधियो मतीनां वै भेदात्त्वमसि तदशेषं मम मतिः ॥ २ ॥ शिवः पादांभस्ते शिरसि धृतवानादरयुतं तथा शक्तिश्चासौ तव तनुजतेजोमयतनुः । दिनेशं चैवामुं तव नयनमूचुस्तु निगमास्त्वदन्यः को ध्येयो जगति किल देवो वद विभो ॥ ३ ॥ क्वचिन्मत्स्यः कूर्मः क्वचिदपि वराहो नरहरिः क्वचित्खर्वो रामो दशरथसुतो नंदतनयः । क्वचिद्बुद्धः कल्किर्विहरसि कुभारापहतये स्वतंत्रोऽजो नित्यो विभुरपि तवाक्रीडनमिदम् ॥ ४ ॥ हृताम्नायेनोक्तः स्तवनवरमाकर्ण्य विधिना द्रुतं मात्स्यं धृत्वा वपुरजरशंखासुरमथो । क्षयं नीत्वा मृत्योर्निगमगणमुद्धृत्य जलधेरशेषं संगुप्तं जगदपि च वेदैकशरणम् ॥ ५ ॥ निमज्जंतं वार्धौ नगवरमुपालोक्य सहसा हितार्थं देवानां कमठवपुषाऽऽविश्य गहनम् । पयोराशिं पृष्ठे तमजित सलीलं धृतवतो जगद्धातुस्तेऽभूत्किमु सुलभभाराय गिरिकः ॥ ६ ॥ हिरण्याक्षः क्षोणीमविशदसुरो नक्रनिलयं समादायामर्त्यैः कमलजमुखैरंबरगतैः । स्तुतेनानंतात्मन्नचिरमवभाति स्म विधृता त्वया दंष्ट्राग्रेऽसाववनिरखिला कंदुक इव ॥ ७ ॥ हरिः क्वास्तीत्युक्ते दनुजपतिनाऽऽपूर्य निखिलं जगन्नादैः स्तंभान्नरहरिशरीरेण करजैः । समुत्पत्याशूरावसुरवरमादारितवतस्तवाख्याता भूमन् किमु जगति नो सर्वगतता ॥ ८ ॥ विलोक्याजं द्रागं कपटलघुकायं सुररिपुर्निषिद्धोऽपि प्रादादसुरगुरुणात्मीयमखिलम् । प्रसन्नस्तद्भक्त्या त्यजसि किल नाद्यापि भवनं बलेर्भक्ताधीन्यं तव विदितमेवामरपते ॥ ९ ॥ समाधावासक्तं नृपतितनयैर्वीक्ष्य पितरं हतं बाणै रोषाद्रुरुतरमुपादाय

परशुम् । विना क्षत्रं विष्णो क्षितितलमशेषं कृतवतोऽसकृत्किं भूभारोद्धरणपटुता ते न विदिता ॥ १० ॥ समाराध्योमेशं त्रिभुवनमिदं वासवमुखं वशे चक्रे चक्रिन्नगणयदनीशं जगदिदम् । गतोऽसौ लंकेशस्त्वचिरमथ ते बाणविषयं न केनाप्तं त्वत्तः फलमविनयस्यासुररिपो ॥ ११ ॥ क्वचिद्दिव्यं शौर्यं क्वचिदपि रणे कापुरुषता क्वचिद्गीताज्ञानं क्वचिदपि परस्त्रीविहरणम् । क्वचिन्मृत्स्नाशित्वं क्वचिदपि च वैकुंठविभवश्चरित्रं ते नूनं शरणद विमोहाय कुधियाम् ॥ १२ ॥ न हिंस्यादित्येतद्ध्रुवमवितथं वाक्यमबुधैरथाग्नीषोमीयं पशुमिति तु विप्रैर्निगदितम् । तवैतन्नास्थानेऽसुरगणविमोहाय गदतः समृद्धिर्नीचानां नयकर हि दुःखाय जगतः ॥ १३ ॥ विभागे वर्णानां निगमनिचये चावनितले विलुप्ते संजातो द्विजवरगृहे शंभलपुरे । समारुह्याश्वं लसदसिकरो म्लेच्छनिकरान्निहंताऽस्युन्मत्तान्किल कलियुगांते युगपते ॥ १४ ॥ गभीरे कासारे जलचरवराकृष्टचरणो रणेऽशक्तो मज्जन्नभयद जलेऽचिंतयदसौ । यदा नागेंद्रस्त्वां सपदि पदपाशादपगतो गतः स्वर्गं स्थानं भवति विपदां ते किमु जनः ॥ १५ ॥ सुतैः पृष्टो वेधाः प्रतिवचनदानेऽप्रभुरसावथात्मन्यात्मानं शरणमगमस्त्वां त्रिजगताम् । ततस्तेऽस्तातंका ययुरथ मुदं हंसवपुषा त्वया ते सार्वज्ञ्यं प्रथितममरेशेह किमु नो ॥ १६ ॥ समाविद्धो मातुर्वचनविशिखैराशु विपिनं तपश्चक्रे गत्वा तव परमतोषाय परमम् । ध्रुवो लेभे दिव्यं पदमचलमल्पेऽपि वयसि किमस्त्यस्मिँल्लोके त्वयि वरद तुष्टे दुरधिगम् ॥ १७ ॥ वृकान्नीतस्तूर्णं स्वजनभयभित्त्वां पशुपतिर्भ्रमँल्लोकान्सर्वान् शरणमुपयातोऽथ दनुजः । स्वयं भस्मीभूतस्तव वचनभंगोद्गतमती रमेशाहो माया तव दुरनुमेयाऽखिलजनैः ॥ १८ ॥

हृतं दैत्यैर्दृष्ट्वाऽमृतघटमजय्यैस्तु नयतः कटाक्षैः संमोहं युवतिवर-वेषेण दितिजान् । समग्रं पीयूषं सुभग सुरपूगाय ददतः समस्यापि प्रायस्तव खलु हि भृत्येष्वभिरतिः ॥ १९ ॥ समाकृष्टा दुष्टैर्द्रुपद-तनयाऽलब्धशरणा सभायां सर्वात्मंस्तव शरणमुच्चैरुपगता । समक्षं सर्वेषामभवदचिरं चीरनिचयः स्मृतेस्ते साफल्यं नयनविषयं नो किमु सताम् ॥ २० ॥ वदंत्येके स्थानं तव वरद वैकुंठमपरे गवां लोकं लोकं फणिनिलयपातालमितरे । तथान्ये क्षीरोदं हृदयनलिनं चापि तु सतां न मन्ये तत्स्थानं त्वहमिह च यत्रासि न विभो ॥ २१ ॥ शिवोऽहं रुद्राणामहममरराजो दिविषदां मुनीनां व्यासोऽहं सुरवर समुद्रोऽस्मि सरसाम् । कुबेरो यक्षाणामिति तव वचो मंदमतये न जाने तज्जातं जगति ननु यत्रासि भगवन् ॥ २२ ॥ शिरो नाको नेत्रे शशिदिनकरावंबरमुरो दिशः श्रोत्रे वाणी निगमनिकरस्ते कटिरिला । अकूपारो बस्तिश्चरणमपि पाताल-मिति वै स्वरूपं तेऽज्ञात्वा नृतनुमवजानंति कुधियः ॥ २३ ॥ शरीरं वैकुंठं हृदयनलिनं वाससदनं मनोवृत्तिस्तार्क्ष्यो मतिरियमथो सागरसुता । विहारस्तेऽवस्थात्रितयमसवः पार्षदगणो न पश्यत्यज्ञा त्वामिह बहिरहो याति जनता ॥ २४ ॥ सुघोरं कांतारं विशति च तडागं सुगहनं तथोत्तुंगं शृंगं सपदि च समारोहति गिरेः । प्रसूनार्थं चेतोंबुजममलमेकं त्वयि विभो समर्प्याज्ञस्तूर्णं बत न च सुखं विंदति जनः ॥ २५ ॥ कृतैकांतावासा विगतनिखिलाशाः शमपरा जितश्वासोच्छ्वासास्त्रुटितभवपाशाः सुयमिनः । परं ज्योतिः पश्यंत्य-नघ यदि पश्यंतु मम तु श्रियाश्लिष्टं भूयान्नयनविषयं ते किल वपुः ॥ २६ ॥ कदा गंगोत्तुंगामलतरतरंगाच्छपुलिने वसन्नाशा-पाशादखिलखलदाशादपगतः । अये लक्ष्मीकांतांबुजनयन ताता-

नरपते प्रसीदेत्याजल्पन्नमरवर नेष्यामि समयम् ॥ २७ ॥ कदा श्रृंगैः स्फीते मुनिगणपरीते हिमनगे द्रुमावीते शीते सुरमधुरगीते प्रतिवसन् । क्वचिद्ध्यानासक्तो विषयसुविरक्तो भवहरं स्मरँस्ते पादाब्जं जनिहर समेष्यामि विलयम् ॥ २८ ॥ सुधापानं ज्ञानं न च विपुलदानं न निगमो न यागो नो योगो न च निखिलभोगोपरमणम् । जपो नो नो तीर्थं व्रतमिह न चोग्रं त्वयि तपो विना भक्तिं तेऽलं भवभयविनाशाय मधुहन् ॥ २९ ॥ नमः सर्वेष्टाय श्रुतिशिखरदृष्टाय च नमो नमोऽसंश्लिष्टाय त्रिभुवननिविष्टाय च नमः । नमो विस्पष्टाय प्रणवपरिमृष्टाय च नमो नमस्ते सर्वात्मन्पुनरपि पुनस्ते मम नमः ॥ ३० ॥ कणान्कश्चिद्वृष्टेर्गणननिपुणस्तूर्णमवनेस्तथाशेषान्पांसूनमित कलयेच्चापि तु जनः । नभः पिंडीकुर्यादशिरमपि चेच्चर्मवदिदं तथापीशासौ ते कलयितुमलं नाखिलगुणान् ॥३१॥ क्व माहात्म्यं सीमोज्झितमविषयं वेदवचसां विभो ते मे चेतः क्व च विविधतापाहतमिदम् । मयेदं यत्किंचिद्वदितमथ बाल्येन तु गुरो गृहाणैतच्छुद्धार्पितमिह न हेयं हि महताम् ॥ ३२ ॥ इति हरिस्तवनं सुमनोहरं परमहंसजनेन समीरितम् । सुगमसुन्दरसारपदास्पदं तदिदमस्तु हरेरनिशं मुदे ॥ ३३ ॥ गदारथांगांबुजकंबुधारिणो रमासमाश्लिष्टतनोस्तनोतु नः । बिलेशयाधीशशरीरशायिनः शिवं स्तवोऽजस्रमयं परं हरेः ॥ ३४ ॥ पठेदिमं यस्तु नरः परं स्तवं समाहितोघौघवनप्रभञ्जनम् । स विंदतेऽत्राखिलभोगसंपदो महीयते विष्णुपदे ततो ध्रुवम् ॥ ३५ ॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीविष्णुमहिम्नः स्तोत्रं संपूर्णम् ॥

## ४४. श्रीहरिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जगज्जालपालं कचत्कंठमालं शरच्चंद्रभालं महादैत्यकालम् । नभोनीलकायं दुरावारमायं सुपद्मासहायं भजेऽहं

भजेऽहम् ॥ १ ॥ सदांभोधिवासं गलत्पुष्पहासं जगत्संनिवासं शतादित्यभासम् । गदाचक्रशस्त्रं लसत्पीतवस्त्रं हसच्चारुवक्त्रं भजे० ॥ २ ॥ रमाकंठहारं श्रुतिव्रातसारं जलांतर्विहारं धराभारहारम् । चिदानंदरूपं मनोज्ञस्वरूपं धृतानेकरूपं भजे० ॥ ३ ॥ जराजन्महीनं परानंदपीनं समाधानलीनं सदैवानवीनम् । जगज्जन्महेतुं सुरानीककेतुं त्रिलोकैकसेतुं भजे० ॥ ४ ॥ कृताम्नायगानं खगाधीशयानं विमुक्तेर्निदानं हरारातिमानम् । स्वभक्तानुकूलं जगद्वृक्षमूलं निरस्तार्तशूलं भजे० ॥ ५ ॥ समस्तामरेशं द्विरेफाभकेशं जगद्विंबलेशं हृदाकाशदेशम् । सदा दिव्यदेहं विमुक्ताखिलेहं सुवैकुंठगेहं भजे० ॥ ६ ॥ सुरालीबलिष्ठं त्रिलोकीवरिष्ठं गुरूणां गरिष्ठं स्वरूपैकनिष्ठम् । सदा युद्धधीरं महावीरधीरं भवांभोधितीरं भजे० ॥ ७ ॥ रमावामभागं तलानग्ननागं कृताधीनयागं गतारागरागम् । मुनींद्रैः सुगीतं सुरैः संपरीतं गुणौघैरतीतं भजे० ॥ ८ ॥ इदं यस्तु नित्यं समाधाय चित्तं पठेदष्टकं कष्टहारं मुरारेः । स विष्णोर्विशोकं ध्रुवं याति लोकं जराजन्मशोकं पुनर्विंदते नो ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीहरिस्तोत्रं संपूर्णम् ॥

## ४५. श्रीहरिनामाष्टकम् ।

श्रीगणेशाय नमः ॥ श्रीकेशवाच्युत मुकुंद रथांगपाणे गोविंद माधव जनार्दन दानवारे । नारायणामरपते त्रिजगन्निवास जिह्वे जपेति सततं मधुराक्षराणि ॥ १ ॥ श्रीदेवदेव मधुसूदन शार्ङ्गपाणे दामोदरार्णवनिकेतन कैटभारे । विश्वंभराभरण भूषितभूमिपाल जिह्वे० ॥ २ ॥ श्रीपद्मलोचन गदाधर पद्मनाभ पद्मेश पद्मपद पावन पद्मपाणे । पीतांबरांबररुचे रुचिरावतार जिह्वे० ॥ ३ ॥

श्रीकांत कौस्तुभधरार्तिहराब्जपाणे विष्णो त्रिविक्रम महीधर धर्मसेतो । वैकुंठवास वसुधाधिप वासुदेव जिह्वे० ॥ ४ ॥ श्रीनारसिंह नरकांतक कांतमूर्ते लक्ष्मीपते गरुडवाहन शेषशायिन् । केशिप्रणाशन सुकेश किरीटमौले जिह्वे० ॥ ५ ॥ श्रीवत्सलांछन सुरर्षभ शंखपाणे कल्पांतवारिधिविहार हरे मुरारे । यज्ञेश यज्ञमय यज्ञभुगादिदेव जिह्वे० ॥ ६ ॥ श्रीराम रावणरिपो रघुवंशकेतो सीतापते दशरथात्मज राजसिंह । सुग्रीवमित्र मृगवेधन चापपाणे जिह्वे० ॥ ७ ॥ श्रीकृष्ण वृष्णिवर यादव राधिकेश गोवर्धनोद्धरण कंसविनाश शौरे । गोपाल वेणुधर पांडुसुतैकबंधो जिह्वे० ॥ ८ ॥ इत्यष्टकं भगवतः सततं नरो यो नामांकितं पठति नित्यमनन्यचेताः । विष्णोः परं पदमुपैति पुनर्न जातु मातुः पयोधररसं पिबतीह सत्यम् ॥ ९ ॥ इति श्रीमत्परमहंसस्वामिब्रह्मानंदविरचितं श्रीहरिनामाष्टकं संपूर्णम् ॥

## ४६. श्रीहरिशरणाष्टकम् ।

श्रीगणेशाय नमः ॥ ध्येयं वदंति शिवमेव हि केचिदन्ये शक्तिं गणेशमपरे तु दिवाकरं वै । रूपैस्तु तैरपि विभासि यतस्त्वमेकस्तस्मात्त्वमेव शरणं मम शंखपाणे ॥ १ ॥ नो सोदरो न जनको जननी न जाया नैवात्मजो न च कुलं विपुलं बलं वा । संदृश्यते न किल कोऽपि सहायको मे तस्मात्त्व० ॥ २ ॥ नोपासिता मदमपास्य मया महांतस्तीर्थानि चास्तिकधिया नहि सेवितानि । देवार्चनं च विधिवन्न कृतं कदापि तस्मात्त्व० ॥ ३ ॥ दुर्वासना मम सदा परिकर्षयंति चित्तं शरीरमपि रोगगणा दहंति । संजीवनं च परहस्तगतं सदैव तस्मात्त्व० ॥ ४ ॥ पूर्वं कृतानि दुरितानि मया

तु यानि स्मृत्वाऽखिलानि हृदयं परिकंपते मे । ख्याता च ते पतितपावनता तु यस्मात्तस्मात्त्व० ॥ ५ ॥ दुःखं जराजननजं विविधाश्च रोगाः काकश्वसूकरजनिर्निरये च पातः । त्वद्विस्मृतेः फलमिदं विततं हि लोके तस्मात्त्व० ॥ ६ ॥ नीचोऽपि पापवलितोऽपि विनिंदितोऽपि ब्रूयात्तवाहमिति यस्तु किलैकवारम् । तं यच्छसीश निजलोकमिति व्रतं ते तस्मात्त्व० ॥ ७ ॥ वेदेषु धर्मवचनेषु तथागमेषु रामायणेऽपि च पुराणकदंबके वा । सर्वत्र सर्वविधिना गदितस्त्वमेव तस्मात्त्व० ॥ ८ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीहरिशरणाष्टकं संपूर्णम् ॥

## ४७. श्रीदीनबंध्वष्टकम् ।

श्रीगणेशाय नमः ॥ यस्मादिदं जगदुदेति चतुर्मुखाद्यं यस्मिन्नवस्थितमशेषमशेषमूले । यत्रोपयाति विलयं च तमस्तमंते दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ॥ १ ॥ चक्रं सहस्रकरचारु करारविंदे गुर्वी गदा दरवरश्च विभाति यस्य । पक्षींद्रपृष्ठपरिरोपितपादपद्मो दृग्गोचरो० ॥ २ ॥ येनोद्धृता वसुमती सलिले निमग्ना नग्ना च पांडववधूः स्थगिता दुकूलैः । संमोचितो जलचरस्य मुखाद्गजेंद्रो दृग्गो० ॥ ३ ॥ यस्यार्द्रदृष्टिवशतस्तु सुराः समृद्धिं कोपेक्षणेन दनुजा विलयं व्रजंति । भीताश्चरंति च यतोऽर्कयमानिलाद्या दृग्गो० ॥ ४ ॥ गायंति सामकुशला यमजं मखेषु ध्यायंति धीरमतयो यतयो विविक्ते । पश्यंति योगिपुरुषाः पुरुषं शरीरे दृग्गो० ॥ ५ ॥ आकाररूपगुणयोगविवर्जितोऽपि भक्तानुकंपननिमित्तगृहीतमूर्तिः । यः सर्वगोऽपि कृतशेषशरीरशय्यो दृग्गो० ॥ ६ ॥ यस्यांघ्रिपंकजमनिंद्रमुनींद्रवृंदैराराध्यते भवदवानलदाहशांत्यै । सर्वापराध-

मविचिंत्य ममाखिलात्मा दृग्गो० ॥ ७ ॥ यन्नामकीर्तनपरः श्वपचोऽपि नूनं हित्वाखिलं कलिमलं भुवनं पुनाति । दग्ध्वा ममाघमखिलं करुणेक्षणेन दृग्गो० ॥ ८ ॥ दीनबंध्वष्टकं पुण्यं ब्रह्मानंदेन भाषितम् । यः पठेत्प्रयतो नित्यं तस्य विष्णुः प्रसीदति ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीदीनबंध्वष्टकं संपूर्णम् ॥

## ४८. श्रीगोविंदाष्टकम् ।

श्रीगणेशाय नमः ॥ चिदानंदाकारं श्रुतिसरससारं समरसं निराधाराधारं भवजलधिपारं परगुणम् । रमाग्रीवाहारं व्रजवनविहारं हरनुतं सदा तं गोविंदं परमसुखकंदं भजत रे ॥ १ ॥ महांभोधिस्थानं स्थिरचरनिदानं दिविजपं सुधाधारापानं विहगपतियानं यमरतम् । मनोज्ञं सुज्ञानं मुनिजननिधानं ध्रुवपदं सदा० ॥ २ ॥ धिया धीरैर्ध्येयं श्रवणपुटपेयं यतिवरैर्महावाक्यैर्ज्ञेयं त्रिभुवनविधेयं विधिपरम् । मनोमानामेयं सपदि हृदि नेयं नवतनुं सदा० ॥ ३ ॥ महामायाजालं विमलवनमालं मलहरं सुभालं गोपालं निहतशिशुपालं शशिमुखम् । गलातीतं कालं गतिहयमरालं मुररिपुं सदा० ॥ ४ ॥ नभोबिंबस्फीतं निगमगणगीतं समगतिं सुरौघे संप्रीतं दितिजविपरीतं पुरिशयम् । गिरां पंथातीतं स्वदितनवनीतं नयकरं सदा० ॥ ५ ॥ परेशं पद्मेशं शिवकमलजेशं शिवकरं द्विजेशं देवेशं तनुकुटिलकेशं कलिहरम् । खगेशं नागेशं निखिलभुवनेशं नगधरं सदा० ॥ ६ ॥ रमाकांतं कांतं भवभयभयांतं भवसुखं दुराशांतं शांतं निखिलहृदि भांतं भुवनपम् । विवादांतं दांतं दनुजनिचयांतं सुचरितं सदा० ॥ ७ ॥ जगज्ज्येष्ठं श्रेष्ठं सुरपतिकनिष्ठं क्रतुपतिं बलिष्ठं भूयिष्ठं त्रिभुवनवरिष्ठं वरवहम् । स्वनिष्ठं

धर्मिष्ठं गुरुगुणगरिष्ठं गुरुवरं सदा० ॥ ८ ॥ गदापाणेरेतद्दुरितदलनं दुःखशमनं विशुद्धात्मा स्तोत्रं पठति मनुजो यस्तु सततम् । स भुक्त्वा भोगौघं चिरमिह ततोऽपास्तवृजिनो वरं विष्णोः स्थानं व्रजति खलु वैकुंठभुवनम् ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीगोविंदाष्टकं संपूर्णम् ॥

## ४९. रमापत्यष्टकम् ।

श्रीगणेशाय नमः ॥ जगदादिमनादिमजं पुरुषं शरदंबरतुल्यतनुं वितनुम् । धृतकंजरथांगगदं विगदं प्रणमामि रमाधिपतिं तमहम् ॥ १ ॥ कमलाननकंजरतं विरतं हृदि योगिजनैः कलितं ललितम् । कुजनैः सुजनैरलभं सुलभं प्रण० ॥ २ ॥ मुनिवृंदहृदिस्थपदं सुपदं निखिलाध्वरभागभुजं सुभुजम् । हृतवासवमुख्यमदं विमदं प्रण० ॥ ३ ॥ हृतदानवदृप्तबलं सुबलं स्वजनास्तसमस्तमलं विमलम् । समपास्तगजेंद्रदरं सुदरं प्रण० ॥ ४ ॥ परिकल्पितसर्वकलं विकलं सकलागमगीतगुणं विगुणम् । भवपाशनिराकरणं शरणं प्रण० ॥ ५ ॥ मृतिजन्मजराशमनं कमनं शरणागतभीतिहरं दहरम् । परितुष्टरमाहृदयं सुदयं प्रण० ॥ ६ ॥ सकलावनिबिंबधरं स्वधरं परिपूरितसर्वदिशं सुदृशम् । गतशोकमशोककरं सुकरं प्रण० ॥ ७ ॥ मथितार्णवराजरसं सरसं ग्रहिताखिललोकहृदं सुहृदम् । प्रथिताद्भुतशक्तिगणं सुगणं प्रण० ॥ ८ ॥ सुखराशिकरं भवबंधहरं परमाष्टकमेतदनन्यमतिः । पठतीह तु योऽनिशमेव नरो लभते खलु विष्णुपदं स परम् ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीरमापत्यष्टकं संपूर्णम् ॥

## ५०. कमलापत्यष्टकम् ।

श्रीगणेशाय नमः ॥ भुजगतल्पगतं घनसुंदरं गरुडवाहनमंबुजलोचनम् । नलिनचक्रगदाकरमव्ययं भजत रे मनुजाः कमला-

पतिम् ॥ १ ॥ अलिकुलासितकोमलकुंतलं विमलपीतदुकूलमनोहरम् । जलधिजाश्रितवामकलेवरं भजत० ॥ २ ॥ किमु जपैश्च तपोभिरुताध्वरैरपि किमुत्तमतीर्थनिषेवणैः । किमुत शास्त्रकदंबविलोकनैर्भजत० ॥ ३ ॥ मनुजदेहमिमं भुवि दुर्लभं समधिगम्य सुरैरपि वांछितम् । विषयलंपटतामपहाय वै भजत० ॥ ४ ॥ न वनिता न सुतो न सहोदरो न हि पिता जननी न च बांधवः । व्रजति साकमनेन जनेन वै भजत० ॥ ५ ॥ सकलमेव चलं सचराचरं जगदिदं सुतरां धनयौवनम् । समवलोक्य विवेकदृशा द्रुतं भजत० ॥ ६ ॥ विविधरोगयुतं क्षणभंगुरं परवशं नवमार्गमलाकुलम् । परिनिरीक्ष्य शरीरमिदं स्वकं भजत० ॥ ७ ॥ मुनिवरैरनिशं हृदि भावितं शिवविरिंचिमहेंद्रनुतं सदा । मरणजन्मजराभयमोचनं भजत० ॥ ८ ॥ हरिपदाष्टकमेतदनुत्तमं परमहंसजनेन समीरितम् । पठति यस्तु समाहितचेतसा व्रजति विष्णुपदं स नरो ध्रुवम् ॥ ९ ॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं कमलापत्यष्टकं समाप्तम् ॥

## ५१. संकष्टनाशनविष्णुस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारद उवाच ॥ पुनर्दैत्यं समायांतं दृष्ट्वा देवाः सवासवाः । भयप्रकंपिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ॥ १ ॥ देवा ऊचुः ॥ नमो मत्स्यकूर्मादिनानास्वरूपैः सदा भक्तकार्योद्यतायार्तिहंत्रे । विधात्रादिसर्गस्थितिध्वंसकर्त्रे गदाशंखपद्मारिहस्ताय तेऽस्तु ॥ २ ॥ रमावल्लभायासुराणां निहंत्रे भुजंगारियानाय पीतांबराय । मखादिक्रियापाककर्त्रे विकर्त्रे शरण्याय तस्मै नताः स्मो नताः स्मः ॥ ३ ॥ नमो दैत्यसंतापितामर्त्यदुःखाचलध्वंसदंभोलये विष्णवे ते ।

भुजंगेशतल्पेशयायार्कचंद्रद्विनेत्राय तस्मै नताः स्मो नताः स्मः ॥ ४ ॥ नारद उवाच ॥ संकष्टनाशनं नाम स्तोत्रमेतत्पठेन्नरः । स कदाचिन्न संकष्टैः पीड्यते कृपया हरेः ॥ ५ ॥ इति श्रीपद्मपुराणे पृथुनारदसंवादे संकष्टनाशनं नाम विष्णुस्तोत्रं संपूर्णम् ॥

## ५२. नारायणहृदयम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीनारायणहृदयस्तोत्रमन्त्रस्य भार्गव ऋषिः, अनुष्टुप् छन्दः, श्रीलक्ष्मीनारायणो देवता, श्रीलक्ष्मीनारायणप्रीत्यर्थे जपे विनियोगः ॥ अथ करन्यासः ॥ ॐ नारायणः परं ज्योतिरित्यङ्गुष्ठाभ्यां नमः । ॐ नारायणः परं ब्रह्मेति तर्जनीभ्यां नमः । ॐ नारायणः परो देवेति मध्यमाभ्यां नमः । ॐ नारायणः परं धामेति अनामिकाभ्यां नमः । ॐ नारायणः परो धर्म इति कनिष्ठिकाभ्यां नमः । ॐ विश्वं नारायणः पर इति करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ॥ अथ ध्यानम् ॥ उद्यदादित्यसंकाशं पीतवाससमच्युतम् । शङ्खचक्रगदापाणिं ध्यायेल्लक्ष्मीपतिं हरिम् ॥ ॐ नमो भगवते नारायणाय इति मन्त्रं जपेत् ॥ श्रीवेदव्यास उवाच ॥ श्रीमन्नारायणो ज्योतिरात्मा नारायणः परः । नारायणः परं ब्रह्म नारायण नमोऽस्तु ते ॥ १ ॥ नारायणः परो देवो दाता नारायणः परः । नारायणः परो ध्याता नारायण नमोऽस्तु ते ॥ २ ॥ नारायणः परं धाम ध्याता नारायणः परः । नारायणः परो धर्मो नारायण नमोऽस्तु ते ॥ ३ ॥ नारायणपरो बोधो विद्या नारायणः परा । विश्वं नारायणः साक्षान्नारायण नमोऽस्तु ते ॥ ४ ॥ नारायणाद्विधिर्जातो जातो नारायणाच्छिवः । जातो नारायणादिन्द्रो नारायण नमोऽस्तु ते ॥ ५ ॥

रविर्नारायणं तेजश्चन्द्रो नारायणं महः । वह्निर्नारायणः साक्षान्नारायण नमोऽस्तु ते ॥ ६ ॥ नारायण उपास्यः स्याद्गुरुर्नारायणः परः । नारायणः परो बोधो नारायण नमोऽस्तु ते ॥ ७ ॥ नारायणः फलं मुख्यं सिद्धिर्नारायणः सुखम् । सर्वं नारायणः शुद्धो नारायण नमोऽस्तु ते ॥ ८ ॥ नारायणस्त्वमेवासि नारायण हृदि स्थितः । प्रेरकः प्रेर्यमाणानां त्वया प्रेरितमानसः ॥ ९ ॥ त्वदाज्ञां शिरसा धृत्वा जपामि जनपावनम् । नानोपासनमार्गाणां भावकृद्भावबोधकः ॥ १० ॥ भावकृद्भावभूतस्त्वं मम सौख्यप्रदो भव । त्वन्मायामोहितं विश्वं त्वयैव परिकल्पितम् ॥ ११ ॥ त्वदधिष्ठानमात्रेण सैव सर्वार्थकारिणी । त्वमेवैतां पुरस्कृत्य मम कामान् समर्पय ॥ १२ ॥ न मे त्वदन्यः संत्राता त्वदन्यं न हि दैवतम् । त्वदन्यं न हि जानामि पालकं पुण्यरूपकम् ॥ १३ ॥ यावत्सांसारिको भावो नमस्ते भावनात्मने । तत्सिद्धिदो भवेत्सद्यः सर्वथा सर्वदा विभो ॥ १४ ॥ पापिनामहमेकाग्र्यो दयालूनां त्वमग्रणीः । दयनीयो मदन्योऽस्ति तव कोऽत्र जगत्त्रये ॥ १५ ॥ त्वयाऽप्यहं न सृष्टश्चेन्न स्यात्तव दयालुता । आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः ॥ १६ ॥ पापसंघपरिक्रान्तः पापात्मा पापरूपधृक् । त्वदन्यः कोऽत्र पापेभ्यस्त्राता मे जगतीतले ॥ १७ ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या च गुरुस्त्वमेव त्वमेव सर्वं मम देवदेव ॥१८॥ प्रार्थनादशकं चैव मूलाष्टकमथापि वा । यः पठेच्छृणुयान्नित्यं तस्य लक्ष्मीः स्थिरा भवेत् ॥ १९ ॥ नारायणस्य हृदयं सर्वाभीष्टफलप्रदम् । लक्ष्मीहृदयकं स्तोत्रं यदि चैतद्विनाकृतम् ॥ २० ॥ तत्सर्वं निष्फलं प्रोक्तं लक्ष्मीः क्रुध्यति सर्वतः । एतत्संकलितं स्तोत्रं

सर्वाभीष्टफलप्रदम् ॥ २१ ॥ लक्ष्मीहृदयकं स्तोत्रं तथा नारायणात्मकम् । जपेद्यः संकलीकृत्य सर्वाभीष्टमवाप्नुयात् ॥ २२ ॥ नारायणस्य हृदयमादौ जप्त्वा ततः परम् । लक्ष्मीहृदयकं स्तोत्रं जपेन्नारायणं पुनः ॥ २३ ॥ पुनर्नारायणं जप्त्वा पुनर्लक्ष्मीहृदं जपेत् । पुनर्नारायणहृदं संपुटीकरणं जपेत् । एवं मध्ये द्विवारेण जपेल्लक्ष्मीहृदं हि तत् ॥ २४ ॥ लक्ष्मीहृदयकं स्तोत्रं सर्वमेतत्प्रकाशितम् । तद्वज्जपादिकं कुर्यादेतत्संकलितं शुभम् ॥ २५ ॥ स सर्वकाममाप्नोति आधिव्याधिभयं हरेत् । गोप्यमेतत्सदा कुर्यान्न सर्वत्र प्रकाशयेत् ॥ २६ ॥ इति गुह्यतमं शास्त्रमुक्तं ब्रह्मादिकैः पुरा । तस्मात्सर्वप्रयत्नेन गोपयेत्साधयेत्सुधीः ॥ २७ ॥ यत्रैतत्पुस्तकं तिष्ठेल्लक्ष्मीनारायणात्मकम् । भूतप्रेतपिशाचांश्च वेतालान्नाशयेत्सदा ॥ २८ ॥ लक्ष्मीहृदयप्रोक्तेन विधिना साधयेत्सुधीः । भृगुवारे च रात्रौ तु पूजयेत्पुस्तकद्वयम् ॥ २९ ॥ सर्वदा सर्वथा सत्यं गोपयेत्साधयेत्सुधीः । गोपनात्साधनाल्लोके धन्यो भवति तत्त्ववित् । नारायणहृदं नित्यं नारायण नमोऽस्तु ते ॥ ३० ॥ इत्यथर्वणरहस्योत्तरभागे नारायणहृदयं संपूर्णम् ॥

## ५३. भगवद्ध्यानसोपानम् ।

श्रीगणेशाय नमः ॥ अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टेश्चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् । दीनानाथव्यसनशमनं दैवतं दैवतानां दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ॥ १ ॥ वेदातीतश्रुतिपरिमलं वेधसां मौलिसेव्यं प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे । लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥ २ ॥ चित्राकारां

कटकरुचिभिश्चारुवृत्तानुपूर्वां काले दूत्यद्भुततरगतिं कान्तिलीला-कलाचीम् । जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति ॥ ३ ॥ कामारामस्थिरकदलिकास्तम्भ-संभावनीयं क्षौमाश्लिष्टं किमपि कमलाभूमिनीलोपधानम् । न्यञ्च-त्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं लावण्यौघद्वयमिव मति-र्मामिका रङ्गयूनः ॥ ४ ॥ संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा । नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥ ५ ॥ श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः । सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या संतापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥ ६ ॥ एकं लीलोप-हितमितरं बाहुमाजानुलम्बं प्राप्ता रङ्गे शयितुरखिलप्रार्थनापारि-जातम् । दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां चिन्ताहस्तिन्य-नुभवति मे चित्रमालानयंत्रम् ॥ ७ ॥ साभिप्रायस्मितविकसितं चारुबिम्बाधरोष्ठं दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् । कान्तं वक्त्रं कनकतिलकालंकृतं रङ्गभर्तुः स्वान्ते गाढं विलगति मम स्वागतोदारनेत्रम् ॥ ८ ॥ माल्यैरन्तःस्थिरपरिमलैर्वल्लभास्पर्शमान्यैः कुप्यच्चोलीवचनकुटिलैः कुंतलैः श्लिष्टमूले । रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥ ९ ॥ पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घामूरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् । वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा वक्त्राभिख्यां पिबति वहते वासनां मौलिबन्धे ॥ १० ॥ कान्तोदाररयैरिह भुजैः कङ्कणज्याकिणाङ्कैर्लक्ष्मीधाम्नः पृथुलपरिघै-र्लक्षिता भीतिहेतिः । अग्रे किंचिद्भुजगशयनः स्वात्मनैवात्मनः

सन् मध्येरङ्गं मम च हृदये वर्तते सावरोधः ॥ ११ ॥ रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते विद्वत्सेवाविमलमनसा वेङ्कटेशेन क्लृप्तम् । अक्लेशेन प्रणिहितधियामारुरुक्षोरवस्थां भक्तिं गाढां दिशतु भगवद्ध्यानसोपानमेतत् ॥ १२ ॥ इति श्रीमद्वेङ्कटेशार्यप्रणीतं भगवद्ध्यानसोपानं संपूर्णम् ॥

## ५४. नारायणाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारायणाय सुरमण्डनमण्डनाय नारायणाय सकलस्थितिकारणाय । नारायणाय भवभीतिनिवारणाय नारायणाय प्रभवाय नमो नमस्ते ॥ १ ॥ नारायणाय शतचन्द्रनिभाननाय नारायणाय मणिकुण्डलधारणाय । नारायणाय निजभक्तपरायणाय नारायणाय सुभगाय नमो नमस्ते ॥ २ ॥ नारायणाय सुरलोकप्रपोषकाय नारायणाय खलदुष्टविनाशकाय । नारायणाय दितिपुत्रविमर्दनाय नारायणाय सुलभाय नमो नमस्ते ॥ ३ ॥ नारायणाय रविमण्डलसंस्थिताय नारायणाय परमार्थप्रदर्शनाय । नारायणाय अतुलाय अतीन्द्रियाय नारायणाय विरजाय नमो नमस्ते ॥ ४ ॥ नारायणाय रमणाय रमावराय नारायणाय रसिकाय रसोत्सुकाय । नारायणाय रजोवर्जितनिर्मलाय नारायणाय वरदाय नमो नमस्ते ॥ ५ ॥ नारायणाय वरदाय सुरोत्तमाय नारायणाय अखिलान्तरसंस्थिताय । नारायणाय भयशोकविवर्जिताय नारायणाय प्रबलाय नमो नमस्ते ॥ ६ ॥ नारायणाय निगमाय निरञ्जनाय नारायणाय च हराय नरोत्तमाय । नारायणाय कटिसूत्रविभूषणाय नारायणाय हरये महते नमस्ते ॥ ७ ॥ नारायणाय कटकाङ्गदभूषणाय नारायणाय मणिकौस्तुभशोभनाय । नारायणाय

तुलमौक्तिकभूषणाय नारायणाय च यमाय नमो नमस्ते ॥ ८ ॥ नारायणाय रविकोटिप्रतापनाय नारायणाय शशिकोटिसुशीतलाय। नारायणाय यमकोटिदुरासदाय नारायणाय करुणाय नमो नमस्ते ॥ ९ ॥ नारायणाय मुकुटोज्ज्वलसोज्ज्वलाय नारायणाय मणिनूपुरभूषणाय। नारायणाय ज्वलिताग्निशिखप्रभाय नारायणाय हरये गुरवे नमस्ते ॥ १० ॥ नारायणाय दशकण्ठविमर्दनाय नारायणाय विनतात्मजवाहनाय । नारायणाय मणिकौस्तुभभूषणाय नारायणाय परमाय नमो नमस्ते ॥ ११ ॥ नारायणाय विदुराय च माधवाय नारायणाय कमठाय महीधराय । नारायणाय उरगाधिपमञ्चकाय नारायणाय विरजापतये नमस्ते ॥ १२ ॥ नारायणाय रविकोटिसमाम्बराय नारायणाय च हराय मनोहराय । नारायणाय निजधर्मप्रतिष्ठिताय नारायणाय च मखाय नमो नमस्ते ॥ १३ ॥ नारायणाय भवरोगरसायनाय नारायणाय शिवचापप्रतोटनाय । नारायणाय निजवानरजीवनाय नारायणाय सुभुजाय नमो नमस्ते ॥ १४ ॥ नारायणाय सुरथाय सुहृच्छ्रिताय नारायणाय कुशलाय धुरन्धराय । नारायणाय गजपाशविमोक्षणाय नारायणाय जनकाय नमो नमस्ते ॥ १५ ॥ नारायणाय निजभृत्यप्रपोषकाय नारायणाय शरणागतपञ्जराय । नारायणाय पुरुषाय पुरातनाय नारायणाय सुपथाय नमो नमस्ते ॥ १६ ॥ नारायणाय मणिस्वासनसंस्थिताय नारायणाय शतवीर्यशताननाय । नारायणाय पवनाय च केशवाय नारायणाय रविभाय नमो नमस्ते ॥ १७ ॥ श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः । पतिर्गतिश्चान्धकवृष्णिसात्त्वतां प्रसीदतां मे भगवान् सतांपतिः ॥ १८ ॥ त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने । वपुरलककुलावृताननाब्जं

विजयसखे रतिरस्तु मेऽनवद्या ॥ १९ ॥ अष्टोत्तराधिकशतानि सुकोमलानि नामानि ये सुकृतिनः सततं स्मरन्ति । तेऽनेकजन्मकृतपापचयाद्विमुक्ता नारायणेऽव्यवहितां गतिमाप्नुवन्ति ॥ २० ॥ इति नारायणाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

## ५५. त्रैलोक्यमङ्गलकवचम् ।

ॐनमो नारायणाय ॥ नारद उवाच ॥ भगवन्सर्वधर्मज्ञ कवचं यत्प्रकाशितम् । त्रैलोक्यमङ्गलं नाम कृपया कथय प्रभो ॥ १ ॥ सनत्कुमार उवाच ॥ शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतम् । नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥ ब्रह्मणा कथितं मह्यं परं स्नेहाद्वदामि ते । अतिगुह्यतरं तत्त्वं ब्रह्मम‌न्त्रौघविग्रहम् ॥ ३ ॥ यद्धृत्वा पठनाद्ब्रह्मा सृष्टिं वितनुते ध्रुवम् । यद्धृत्वा पठनात्पाति महालक्ष्मीर्जगत्त्रयम् ॥ ४ ॥ पठनाद्धारणाच्छंभुः संहर्ता सर्वमन्त्रवित् । त्रैलोक्यजननी दुर्गा महिषादिमहासुरान् ॥ ५ ॥ वरदृप्तान् जघानैव पठनाद्धारणाद्यतः । एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ६ ॥ इदं कवचमत्यन्तगुप्तं कुत्रापि नो वदेत् । शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ ७ ॥ शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् । त्रैलोक्यमङ्गलस्यास्य कवचस्य प्रजापतिः ॥ ८ ॥ ऋषिश्छन्दश्च गायत्री देवो नारायणः स्वयम् । धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ ९ ॥ प्रणवो मे शिरः पातु नमो नारायणाय च । भालं मे नेत्रयुगलमष्टार्णो भुक्तिमुक्तिदः ॥ १० ॥ क्लीं पायाच्छ्रोत्रयुग्मं चैकाक्षरः सर्वमोहनः । क्लीं कृष्णाय सदा घ्राणं गोविन्दायेति जिह्विका ॥ ११ ॥ गोपीजनपदवल्लभाय स्वाहाऽऽननं मम । अष्टादशाक्षरो मन्त्रः कण्ठं पातु

दशाक्षरः ॥ १२ ॥ गोपीजनपदवल्लभाय स्वाहा भुजद्वयम् । क्लीं ग्लौं क्लीं श्यामलाङ्गाय नमः स्कन्धौ दशाक्षरः ॥ १३ ॥ क्लीं कृष्णः क्लीं करौ पायात् क्लीं कृष्णायाङ्गतोऽवतु । हृदयं भुवनेशानः क्लीं कृष्णः क्लीं स्तनौ मम ॥ १४ ॥ गोपालायाग्निजायान्तं कुक्षियुग्मं सदाऽवतु । क्लीं कृष्णाय सदा पातु पार्श्वयुग्मं मनूत्तमः ॥ १५ ॥ कृष्णगोविन्दकौ पातां स्माद्यौ ङेयुतौ मनुः । अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥ १६ ॥ पृष्ठं क्लीं कृष्णकं गल्लं क्लीं कृष्णाय द्विठान्तकः । सक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्णठद्वयम् ॥१७॥ ऊरू सप्ताक्षरः पायात्त्रयोदशाक्षरोऽवतु । श्रीं ह्रीं क्लींपदतो गोपीजनवल्लभपदं ततः ॥ १८ ॥ भाय स्वाहेति पायुं वै क्लीं ह्रीं श्रीं सदशार्णकः । जानुनी च सदा पातु ह्रीं श्रीं क्लीं च दशाक्षरः ॥ १९ ॥ त्रयोदशाक्षरः पातु जङ्घे चक्राद्युदायुधः । अष्टादशाक्षरो ह्रींश्रींपूर्वको विंशदर्णकः ॥ २० ॥ सर्वाङ्गं मे सदा पातु द्वारकानायको बली । नमो भगवते पश्चाद्वासुदेवाय तत्परम् ॥ २१ ॥ ताराद्यो द्वादशार्णोऽयं प्राच्यां मां सर्वदाऽवतु । श्रीं ह्रीं क्लीं च दशार्णस्तु क्लीं ह्रीं श्रीं षोडशार्णकः ॥ २२ ॥ गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु । ह्रीं श्रीं दशाक्षरो मन्त्रो दक्षिणे मां सदाऽवतु ॥ २३ ॥ तारो नमो भगवते रुक्मिणीवल्लभाय च । स्वाहेति षोडशार्णोऽयं नैर्ऋत्यां दिशि रक्षतु ॥ २४ ॥ क्लीं हृषीकेशाय पदं नमो मां वरुणोऽवतु । अष्टादशार्णः कामान्तो वायव्ये मां सदाऽवतु ॥ २५ ॥ श्रीं मायाकामकृष्णाय गोविन्दाय द्विठो मनुः । द्वादशार्णात्मको विष्णुरुत्तरे मां सदाऽवतु ॥ २६ ॥ वाग्भवं कामकृष्णाय ह्रीं गोविन्दाय तत्परम् । श्रीं गोपीजनवल्लभान्ते भाय स्वाहा करौ ततः ॥ २७ ॥ द्वाविंशत्यक्षरो मन्त्रो मामै-

शान्ये सदाऽवतु । कालियस्य फणामध्ये दिव्यं नृत्यं करोति तम् ॥ २८ ॥ नमामि देवकीपुत्रं नृत्यराजानमच्युतम् । द्वात्रिंशदक्षरो मन्त्रोऽप्यधो मां सर्वदाऽवतु ॥ २९ ॥ कामदेवाय विद्महे पुष्पबाणाय धीमहि । तन्नोऽनङ्गः प्रचोदयादेषा मां पातु चोर्ध्वतः ॥ ३० ॥ इति ते कथितं विप्र ब्रह्ममन्त्रौघविग्रहम् । त्रैलोक्यमङ्गलं नाम कवचं ब्रह्मरूपकम् ॥ ३१ ॥ ब्रह्मणा कथितं पूर्वं नारायणमुखाच्छ्रुतम् । तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् ॥ ३२ ॥ गुरुं प्रणम्य विधिवत्कवचं प्रपठेत्ततः । सकृद्द्विस्त्रिर्यथाज्ञानं स हि सर्वतपोमयः ॥ ३३ ॥ मन्त्रेषु सकलेष्वेव देशिको नात्र संशयः । शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः ॥ ३४ ॥ हवनादीन्दशांशेन कृत्वा तत्साधयेद्ध्रुवम् । यदि स्यात्सिद्धकवचो विष्णुरेव भवेत्स्वयम् ॥ ३५ ॥ मन्त्रसिद्धिर्भवेत्तस्य पुरश्चर्याविधानतः । स्पर्धामुद्धूय सततं लक्ष्मीर्वाणी वसेत्ततः ॥ ३६ ॥ पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् । दशवर्षसहस्राणि पूजायाः फलमाप्नुयात् ॥ ३७ ॥ भूर्जे विलिख्याङ्गुलिकां स्वर्णस्थां धारयेद्यदि । कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ॥ ३८ ॥ अश्वमेधसहस्राणि वाजपेयशतानि च । महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ॥ ३९ ॥ कलां नार्हन्ति तान्येव सकृदुच्चारणात्ततः । कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ ४० ॥ त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् । इदं कवचमज्ञात्वा यजेद्यः पुरुषोत्तमम् ॥ ४१ ॥ शतलक्षं प्रजप्तोऽपि न मन्त्रस्तस्य सिद्ध्यति ॥ ४२ ॥ इति श्रीमन्नारदपञ्चरात्रे ज्ञानामृतसारे त्रैलोक्यमङ्गलकवचं संपूर्णम् ॥

## ५६. विष्णोरपामार्जनस्तोत्रम् ।

श्रीवासुदेवाय नमः ॥ दाल्भ्य उवाच ॥ भगवन्प्राणिनः सर्वे विषरोगाद्युपद्रवैः । दुष्टग्रहोपघातैश्च सर्वकालमुपद्रुताः ॥ १ ॥ आभिचारिककृत्याभिः स्पर्शरोगैश्च दारुणैः । सदा संपीड्यमानास्ते तिष्ठन्ति मुनिसत्तम ॥ २ ॥ येन कर्मविपाकेन ग्रहरोगाद्युपद्रवाः । न भवन्ति नृणां तन्मे यथावद्वक्तुमर्हसि ॥ ३ ॥ पुलस्त्य उवाच ॥ जनार्दनं भूतपतिं जगद्गुरुं स्मरन्मनुष्यः सततं महामुने । दुष्टान्यशेषाण्यपहन्ति सद्यो निःशेषकार्याणि च साधु साधयेत् ॥ ४ ॥ व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मनि तोषितः । ते नरा मुनिशार्दूल ग्रहरोगादिभागिनः ॥ ५ ॥ यैर्न तत्प्रवणं चित्तं सर्वदैव नरैः कृतम् । विषग्रहज्वराणां ते मनुष्या दाल्भ्य भागिनः ॥ ६ ॥ आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति । तत्तदाप्नोत्यसंदिग्धं परत्राच्युततोषकृत् ॥ ७ ॥ नाधीन्प्राप्नोति न व्याधीन्न विषग्रहबन्धनम् । कृत्यास्पर्शभयं वाऽपि तोषिते मधुसूदने ॥ ८ ॥ सर्वदुष्टशमस्तस्य सौम्यास्तस्य सदा ग्रहाः । देवानामप्यधृष्योऽसौ तुष्टो यस्य जनार्दनः ॥ ९ ॥ यः समः सर्वभूतेषु यथात्मनि तथा परे । उपवासादिना येन तोषितो मधुसूदनः ॥ १० ॥ तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः । अरोगाः सुखिनो भोगान् भोक्तारो मुनिसत्तम ॥ ११ ॥ न तेषां शत्रवो नैव स्पर्शरोगाभिचारिकम् । ग्रहरोगादिकं वाऽपि पापकार्यं न जायते ॥ १२ ॥ अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि तु । रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः ॥ १३ ॥ दाल्भ्य उवाच ॥ अनाराधितगोविन्दा ये नरा दुःखभागिनः । तेषां दुःखाभिभूतानां यत्कर्तव्यं दयालुभिः ॥ १४ ॥ पश्यद्भिः सर्वभूतस्थं वासुदेवं महामुने । समदृष्ट्या हृषीकेशं तन्मम ब्रूह्य-

शेषतः ॥ १५ ॥ पुलस्त्य उवाच ॥ तद्वक्ष्यामि मुनिश्रेष्ठ समाहितमनाः शृणु । रोगदोषहरं नृणां गुरुपापप्रणाशनम् ॥ १६ ॥ सौवर्णं राजतं ताम्रं मृन्मयं वा नवं दृढम् । मव्रणं कलशं शुद्धं स्थापयेत्तन्दुलोपरि ॥ १७ ॥ तत्रोदकं समानीय शुद्धं निर्मलमेव च । शतमेकं कुशान् साग्रान्स्थापयेत्कलशोपरि ॥ १८ ॥ पूजयेत्तत्र कलशमुपचारैः समन्त्रकैः । विरिञ्चिना सहोत्पन्न परमेष्ठीनिसर्गज ॥ १९ ॥ नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव । कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ॥ २० ॥ कुशाग्रे शंकरं विद्यात्त्रयो देवाः कुशे स्थिताः । गृहीत्वैतान्समूलाग्रान् कुशाञ्शुद्धानुपस्पृशेत् ॥२१॥ मार्जयेत्सर्वगात्राणि कुशाग्रैर्दालभ्य शान्तिकृत् । शरीरे यस्य तिष्ठन्ति कुशोत्था जलबिन्दवः । नश्यन्ति तस्य पापानि गरुडेनेव पन्नगाः ॥ २२ ॥ विष्णुभक्तो विशेषेण शुचिस्तद्गतमानसः । रोगग्रहविषार्तानां कुर्याच्छान्तिमिमां शुभाम् ॥ २३ ॥ वाराहं नारसिंहं च वामनं विष्णुमेव च । ध्यात्वा समाहितो भूत्वा दिक्षु नामानि विन्यसेत् ॥ २४ ॥ नारसिंहं समभ्यर्च्य शुचौ देशे कुशासने । मन्त्रैरेतैर्यथालिङ्गं कुर्याद्दिग्बन्धमादितः ॥ २५ ॥ पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे । प्रद्युम्नः पश्चिमे पातु वासुदेवस्तथोत्तरे ॥ २६ ॥ ईशान्यां वामनः पातु ह्याग्नेय्यां तु जनार्दनः । नैर्ऋत्यां पद्मनाभस्तु वायव्यां मधुसूदनः ॥ २७ ॥ ऊर्ध्वं गोवर्धनधरो ह्यधरायां त्रिविक्रमः । एताभ्यो दशदिग्भ्यस्तु सर्वतः पातु केशवः ॥ २८ ॥ जले रक्षतु वाराहः स्थले रक्षतु वामनः । अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥ २९ ॥ एवं कृत्वा तु दिग्बन्धं विष्णुं सर्वत्र संस्मरेत् । आत्मनश्च परस्यापि विधिरेष उदाहृतः ॥ ३० ॥ अव्यग्रचित्तः कुर्वीत न्यासकर्म यथाविधि । एतत्समस्तं

विन्यस्य पश्चान्मन्त्रं प्रयोजयेत् ॥ ३१ ॥ करन्यासं पुरा कृत्वा ततोऽङ्गन्यासमारभेत् । अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम् ॥ ३२ ॥ मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् । कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये तु माधवम् ॥ ३३ ॥ हृन्मध्ये चिन्तयेद्देवं परमात्मानमीश्वरम् । नृसिंहं मणिबन्धे च करपृष्ठे जनार्दनम् ॥ ३४ ॥ कृते च वैष्णवे न्यासे सर्वपापैः प्रमुच्यते । एवं कृत्वा करन्यासं सर्वं तस्याक्षयं भवेत् । एवं न्यासं करे कृत्वा पश्चादङ्गेषु विन्यसेत् ॥ ३५ ॥ शिखायां केशवं न्यस्य मूर्ध्नि नारायणं न्यसेत् । मालाधरं ललाटे च गोविन्दं तु भ्रुवोर्न्यसेत् ॥ ३६ ॥ चक्षुर्मध्ये न्यसेद्विष्णुं श्रोत्रयोर्मधुसूदनम् । त्रिविक्रमं कपोले तु वामनं कर्णमूलयोः ॥ ३७ ॥ नासारन्ध्रद्वये चैव श्रीधरं कल्पयेद्बुधः । उत्तरोष्ठे हृषीकेशं पद्मनाभं तथाधरे ॥ ३८ ॥ दामोदरं दन्तपङ्क्तौ वाराहं चिबुके तथा । जिह्वायां वासुदेवं च तालौ च गरुडध्वजम् ॥ ३९ ॥ वैकुण्ठं कण्ठदेशे च अनन्तं नासिकोपरि । दक्षिणे च भुजे विप्र विन्यसेत् पुरुषोत्तमम् ॥४०॥ वामे भुजे महाभागं राघवं हृदि विन्यसेत् । कुक्ष्योः पृथ्वीधरं चैव पार्श्वयोरमितौजसम् ॥ ४१ ॥ स्तनयोः पीतवसनं हरिं नाभ्यां तु विन्यसेत् । करे तु दक्षिणे विप्र ततः संकर्षणं न्यसेत् ॥ ४२ ॥ वामे रिपुहरं विद्यात्कटिमध्येऽपराजितम् । पृष्ठे क्षितिधरं विद्यादच्युतं स्कन्धयोर्द्वयोः ॥ ४३ ॥ वक्षःस्थले माधवं च कक्षयोर्योगशायिनम् । वामकुक्षे माधवं च दक्षिणे जलशायिनम् ॥ ४४ ॥ योगीशं दक्षिणे पार्श्वे वामपार्श्वे श्रियःपतिम् । आन्त्रेषु वासुदेवं च गुदमध्येऽव्ययं न्यसेत् ॥ ४५॥ स्वयंभुवं मेढ्रमध्ये ऊर्वोश्चैव गदाधरम् । जानुमध्ये चक्रधरं जङ्घयोरच्युतं न्यसेत् ॥ ४६ ॥ पादयोः

पुष्कराक्षं च सर्वतो विश्वरूपिणम् । गुल्फयोर्नारसिंहं च पादपृष्ठेऽमितौजसम् । अङ्गुल्यां श्रीधरं विद्यात् पद्माक्षं सर्वसन्धिषु ॥ ४७ ॥ नखेषु घननीलाङ्गं न्यसेत्पादतलेऽच्युतम् । रोमकूपे गुडाकेशं कृष्णं रक्तास्थिमज्जसु ॥ ४८ ॥ मनोबुद्ध्योरहंकारं चित्ते न्यस्य जनार्दनम् । पादमूले तु देवस्य शङ्खं विन्यस्य निर्मलम् ॥ ४९ ॥ वनमालां हृदि न्यस्य सर्वदेवाभिपूजिताम् । गदां वक्षःस्थले न्यस्य चक्रं चैव तु पृष्ठतः ॥ ५० ॥ श्रीवत्साङ्कं न्यसेन्मूर्ध्नि पङ्कजं कवचे न्यसेत् । आपादमस्तकं चैव विन्यसेत्पुरुषोत्तमम् ॥५१॥ विष्णुरूर्ध्वमधो रक्षेद्वैकुण्ठो विदिशो दिशः । पातु मां सर्वतो रामो धन्वी चक्री च केशवः ॥ ५२ ॥ अथ ध्यानं प्रवक्ष्यामि शृणु पापप्रणाशनम् । वराहरूपिणं देवं संस्मरन्नर्चयञ्जपेत् ॥ ५३ ॥ बृहत्तनुं बृहद्गात्रं बृहद्दंष्ट्रं सुशोभनम् । समस्तवेदवेदाङ्गैर्युक्ताङ्गं भूषणैर्युतम् ॥ ५४ ॥ उद्धृत्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम् । उद्धृत्य भूमिं पाताले हस्ताभ्यामुपगृह्य ताम् ॥ ५५ ॥ आलिङ्ग्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम् । रत्नवैडूर्यमुक्तादिभूषणैरुपशोभितम् ॥ ५६ ॥ पीताम्बरधरं देवं शुक्लमाल्यानुलेपनम् । त्रयस्त्रिंशत्कोटिदेवैः स्तूयमानं दिवानिशम् ॥ ५७ ॥ नृत्यद्भिरप्सरोभिश्च गीयमानं च किन्नरैः । इत्थं ध्यात्वा तथाऽऽत्मानं जपेन्नित्यमतन्द्रितः ॥ ५८ ॥ सुवर्णमण्डपान्तःस्थं पद्मं ध्यायेत्सकेशरम् । सकर्णिकैर्दलैश्चैव ह्यष्टभिः परिशोभितम् ॥ ५९ ॥ कलङ्करहितं देवं पूर्णचन्द्राम्बुजप्रभम् । तडित्समजटाशोभिकण्ठनालेन शोभितम् ॥६०॥ श्रीवत्साङ्कितवक्षःस्थं तीक्ष्णदंष्ट्रं सुलोचनम् । वनमालाविशोभाढ्यं मुक्ताहारोपशोभितम् ॥६१॥ सपङ्कजं चतुर्हस्तं तत्प्रख्यातं

सुशोभनम् । प्रातःसूर्यसमाभ्यां वै कुण्डलाभ्यां विराजितम् ॥६२॥ जानूपरिन्यस्तकरद्वन्द्वरत्ननखाङ्कितम् । जङ्घाभरणसंस्पर्धि शुभालंकरणं त्विषः ॥ ६३ ॥ चतुर्थीचन्द्रसंकाशं सुदंष्ट्रमुखपङ्कजम् । अतिरक्तोष्ठवदनं व्यक्तं समतिभीषणम् ॥ ६४ ॥ वामाङ्कस्थश्रिया युक्तं शान्तिदां तुङ्गरोहिणीम् ॥ ६५ ॥ अर्हणां रक्तपादां च सुभासां शुभलक्षणाम् । सुभ्रूं सुकेशीं सुश्रोणीं सुभुजां सुप्रभाननाम् ॥ ६६ ॥ सुप्रतिष्ठां च सुदतीं चतुर्हस्तां विचिन्तयेत् । दुकूलां चैव चार्वङ्गीं हरिणीं सर्वकामदाम् ॥ ६७ ॥ तप्तकाञ्चनसंकाशां सर्वाभरणभूषिताम् । सुवर्णकलशप्रख्यपीनोन्नतपयोधराम् ॥ ६८ ॥ गृहीतमातुलुङ्गाभ्यामुद्बाहुभ्यामथान्ययोः । गृहीतपद्मयुगलां जाम्बूनदकरां तथा ॥ ६९ ॥ एवं देवीं नृसिंहस्य वामाङ्कोपरि संस्मरेत् ॥ ७० ॥ अतिसुविमलगात्रं रुक्मपात्रस्थमन्नं सुललितदधिखण्डं पाणिना दक्षिणेन । कलशममृतपूर्णं वामहस्ते दधानं तरति सकलदुःखं वामनं भावयेद्यः ॥ ७१ ॥ अजिनदण्डकमण्डलुमेखलारुचिरपावनवामनमूर्तये । इति जगत्त्रितयाय जितारये निगमवाक्पटवे बटवे नमः ॥ ७२ ॥ शान्तं पद्मासनस्थं सकलशशिनिभं श्रीपतिं कोमलाङ्गं हस्ते पीयूषकुम्भं दधियुतकलशं पद्महस्तं तथाऽन्यैः । पीतं वस्त्रं दधानं कटकमुकुटके हारकेयूरमालां नानालंकारयुक्तं स्फटिकमणिनिभं वामनं नौमि दान्तम् ॥ ७३ ॥ अभ्रश्यामः शुभ्रयज्ञोपवीती लसत्कौपीनो जातकृष्णाजिनश्रीः । छत्री दण्डी पुण्डरीकायताक्षः पायान्मायावामनो ब्रह्मचारी ॥ ७४ ॥ क्षीरसागरकल्लोलसीकरौघविभूषितम् । मणिमुक्तामये रम्ये सैकते संस्थितं शुभम् ॥ ७५ ॥ शुभ्रमेघविनिर्मुक्तं सुधासिक्तं सुसुन्दरम् । एवं वामनमात्मानं ध्यात्वाऽपामार्जनं

जपेत् ॥ ७६ ॥ ॐ नमः परमार्थाय पुरुषाय महात्मने । अरूपबहुरूपाय व्यापिने परमात्मने ॥ ७७ ॥ निष्कल्मषाय शुद्धाय ध्यातृपापहराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ७८ ॥ वराहाय नृसिंहाय वामनाय महात्मने । नमः कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ७९ ॥ चिकित्सानन्तरूपाय योगिने परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८० ॥ नारायणाय विश्वाय विश्वेशायेश्वराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८१ ॥ गोविन्दपद्मनाभाय वासुदेवाय शार्ङ्गिणे । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८२ ॥ दामोदराय देवाय अनन्ताय महात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८३ ॥ विष्टरश्रवसे तस्मै क्षीराम्भोनिधिशायिने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८४ ॥ भक्तिप्रियाय देवाय विष्वक्सेनाय शार्ङ्गिणे । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८५ ॥ कृष्णाय वासुदेवाय हरये परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८६ ॥ हिरण्यगर्भपतये हिरण्यकशिपुच्छिदे । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८७ ॥ चक्रहस्ताय शूराय तार्क्ष्यपत्राय धीमते । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८८ ॥ अधोक्षजाय भद्राय श्रीधरायात्ममूर्तये । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८९ ॥ त्रिविक्रमाय रामाय वैकुण्ठाय नराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ९० ॥ सच्चिदानन्दरूपाय योगिने परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ९१ ॥ योगेश्वराय गुह्याय गूढाय परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्त-

त्सिध्यतु मे वचः ॥ ९२ ॥ वाराहेश नृसिंहेश वामनेश त्रिविक्रम । हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥ ९३ ॥ अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः । अखण्डितप्रभावैस्त्वं सर्वदुःखहरो भव ॥ ९४ ॥ हरामुकस्य दुरितं दुष्कृतं दुरुपासितम् । मृत्युबाधार्तिभयदं दुरिष्टस्य च यत्फलम् ॥ ९५ ॥ पराभिध्यानसंस्थानप्रयुक्तं चाभिचारिकम् । गरस्पर्शमहायोगं प्रयोगं जरया जर ॥ ९६ ॥ हरये वासुदेवाय नमः कृष्णाय शार्ङ्गिणे । नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ ९७ ॥ नमः कमलकिञ्जल्कपीतनिर्मलवाससे । महाहवरिपुस्कन्धघृष्टचक्राय चक्रिणे ॥ ९८ ॥ दंष्ट्रोद्धृतक्षितिभृते त्रिमूर्तिपतये नमः । महायज्ञवराहाय शेषभोगोरुशायिने ॥ ९९ ॥ तप्तहाटककेशान्त ज्वलत्पावकलोचन । वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ १०० ॥ तीक्ष्णैर्नखाग्रैर्यदुरो विदार्य त्रातुं सुरान्दैत्यपतिं जघान । सुदर्शनं पद्मगदे च शङ्खं बिभ्रन्नृसिंहोऽस्तु ममाभयाय ॥ १ ॥ काश्यपायातिह्रस्वाय ऋग्यजुःसाममूर्तये । तुभ्यं वामनरूपाय क्रमते गां नमो नमः ॥ २ ॥ वराहाशेषदुष्टानि सर्वपापफलानि च । मर्द मर्द महादंष्ट्र मर्द मर्द महीधर ॥ ३ ॥ नरसिंह करालास्यदन्तप्रान्तनखोज्ज्वल । भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्तिनाशन ॥ ४ ॥ ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् । प्रशमं सर्वदुःखानि नयत्वाशु जनार्दनः ॥ ५ ॥ आद्यन्तवन्तः कवयः पुराणाः सूक्ष्मा बृहन्तोऽप्यनुशासितारः । सर्वान् ज्वरान्घ्नन्तु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ॥ ६ ॥ त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः । स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः ॥ ७ ॥ ज्वरमन्त्रस्य कालाग्निर्ऋषिः, महाज्वरो देवता, गायत्री छन्दः, रोगप्रश-

मनार्थे जपे विनियोगः ॥ ८ ॥ ॐ भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि । तन्नो ज्वरः प्रचोदयात् । अङ्गवङ्गकलिङ्गेषु हूणेषु मगधेषु च । वाराणस्यां च यज्जातं तन्न स्मरसि रे ज्वर ॥ ९ ॥ एकाहिकं द्व्याहिकं च तथा त्रिदिवसज्वरम् । चातुर्थिकं तथात्युग्रं तथैव सततज्वरम् ॥ १० ॥ दोषोत्थं सन्निपातोत्थं तथैवागन्तुकज्वरम् । शमं नयाशु गोविन्द छिन्धि छिन्ध्याशु वेदनाम् ॥ ११ ॥ नेत्रदुःखं शिरोदुःखं दुःखं चोदरसंभवम् । अतिकासमतिश्वासमतितापं सवेपथुम् ॥ १२ ॥ गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगं तथा क्षयम् । कामलादींस्तथा रोगान्प्रमेहांश्चातिदारुणान् ॥ १३ ॥ भगन्दरातिसारांश्च मुखरोगान् सत्वग्भवान् । श्वित्रादीन्नखरोगांश्च त्वगस्थ्यन्तर्बहिःस्थितान् ॥ १४ ॥ अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् । ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥ १५ ॥ कफोद्भवाश्च ये रोगा ये केचित्सान्निपातिकाः । आगन्तुकाश्च ये रोगा लूताविस्फोटकादयः ॥ १६ ॥ ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः । विलयं यान्तु सर्वे ते विष्णोरुच्चारणेन तु ॥ १७ ॥ क्षयं गच्छन्तु शेषास्ते चक्रेणाभिहता हरेः । अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ॥ १८ ॥ नश्यन्तु सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ १९ ॥ अच्युतेति मनः पूतमनन्तेति वचः पुनः । गोविन्देति तनुः पूता त्वज्ञातज्ञातपातकैः ॥ १२० ॥ अच्युतानन्त गोविन्द परमानन्द माधव । ॐ नमः संपुटीकृत्य जपन्नेवमधोक्षजम् ॥ २१ ॥ सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न देवः केशवात्परः ॥ २२ ॥ स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम् । दन्तोद्भूतं नखोद्भूतमाकाशप्रभवं विषम् ॥२३॥ लूतादिप्रभवं चैव विषमत्यन्तदुःखदम् । शमं नयाशु तत्सर्वं

कीर्तितोऽसि जनार्दन ॥ २४ ॥ ग्रहान्प्रेतग्रहांश्चैव तथा वै डाकिनी-ग्रहान् । वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान् ॥ २५ ॥ शाकिनीपूतनादींश्च तथा वैनायकग्रहान् । मुखमण्डलिकान्क्रूरान् रेवतीं वृद्धरेवतीम् ॥ २६ ॥ वृश्चिकाख्यांस्तथा चोग्रांस्तथा मातृ-ग्रहानपि । बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ २७ ॥ नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने । सटाकरालवदनो नरसिंहो महाबलः ॥ २८ ॥ ग्रहानशेषान्निःशेषान् करोतु जगतो हि सः ॥ २९ ॥ नरसिंह महासिंह ज्वालामालोज्ज्वलानन । ग्रहानशेषान्निःशेषान् खाद खादाग्निलोचन ॥ १३० ॥ ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः । यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ ३१ ॥ व्याघ्रसिंहवराहेषु ग्रहभूतभयेषु च । शस्त्रक्षतेषु ये रोगा जालगर्दभकादयः ॥ ३२ ॥ यानि च क्रूरभूतानि प्राणिपीडाकराणि च । तानि सर्वाणि सर्वात्मन्परमात्मन् जनार्दन ॥ ३३ ॥ किंचिद्रूपं समाश्रित्य वासुदेवाशु नाशय । क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम् ॥ ३४ ॥ सर्वदुष्ट-प्रशमनं कुरु देववराच्युत । सुदर्शन महाज्वाल छिन्धि छिन्धि महायुध ॥ ३५ ॥ तीक्ष्णधार महावेग सूर्यकोटिसमप्रभ । त्रैलोक्य-रक्षाकर्तस्त्वं दानवान्वयमर्दन ॥ ३६ ॥ ज्वलत्पावकसंकाश छिन्धि छिन्ध्याशु वेदनाम् । छिन्धि वातं च लूताश्च छिन्धि रोगं मह-द्विषम् ॥ ३७ ॥ छिन्धि छिन्धि महाव्याधीन् छिन्धि छिन्धि महाग्रहान् । रुजं दाहं च शूलं च निमिषजालगर्दभौ ॥ ३८ ॥ सुधन्वाखण्डपरशुर्दारुणो द्रविणप्रदः । ह्रां ह्रां हुं हुं फट्कारेण ठद्वयेन हन द्विषः ॥ ३९ ॥ सुदर्शनस्य मन्त्रेण ग्रहा यान्ति दिशो दश ॥ १४० ॥ ॐ नमो भगवते भो भो सुदर्शन मम दुष्टं

दारय दारय दुरितं हन हन पापं मथ मथ आरोग्यं कुरु ह्रां ह्रीं हुं हुं कुरु फट् स्वाहा ॥ ४१ ॥ त्रैलोक्यरक्षाकर्तस्त्वमाज्ञापय जनार्दन । सर्वदुष्टानि रक्षांसि क्षपयारिविभीषण ॥ ४२ ॥ प्राच्यां रक्ष प्रतीच्यां च दक्षिणोत्तरतस्तथा । ईशान्यां च तथाऽऽग्नेय्यां नैर्ऋत्यां वायुदिश्यपि ॥ ४३ ॥ अधरायां तथोर्ध्वायां सदा रक्षां करोत्वसौ । रक्षां करोतु भगवान्नरसिंहः स्वगर्जितैः ॥ ४४ ॥ भुव्यन्तरिक्षे च तथा पृष्ठतः पार्श्वतोऽग्रतः । रक्षां करोतु भगवान्बहुरूपी जनार्दनः ॥ ४५ ॥ यथा यज्ञेश्वरो विष्णुर्वेदान्तेष्वपि गीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४६ ॥ परमात्मा यथा विष्णुर्वेदान्तेष्वपि धीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४७ ॥ यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४८ ॥ यथा विष्णौ स्मृते सद्यः संक्षयं याति पातकम् । तेन सत्येन सकलं यन्मयोक्तं तथास्तु तत् ॥ ४९ ॥ शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु । स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात् ॥ १५० ॥ यत एवागतं पापं तत्रैव प्रतिगच्छतु । यदस्य दुःखं तत्सर्वं शमं नयतु माधवः ॥ ५१ ॥ वासुदेवशरीरोत्थैः कुशैः संमार्जिता मया । अपामार्जितगोविन्दो नरो नारायणो भवेत् ॥ ५२ ॥ ममास्तु सर्वदुःखानां प्रशमो वचनाद्धरेः । शान्ताः समस्तरोगास्ते ग्रहाः सर्वे विषादयः ॥ ५३ ॥ भूतानि प्रशमं यान्तु स्मृते च मधुसूदने । एतत्समस्तरोगेषु ग्रहभूतभयेषु च ॥५४॥ अपामार्जनकं शस्त्रं विष्णोर्नामाभिमन्त्रितम् । एते कुशा विष्णुशरीरसंभवा जनार्दनाग्रे स्वयमेव चागताः ॥५५॥ हतो मया दुष्टमशेषमस्य स्वस्थो भवत्वेष यथा वचो हरेः ॥ ५६ ॥ शान्तिरस्तु शिवं चास्तु

दुष्टमस्य प्रशाम्यतु । यदस्य दुरितं किंचित्तत्क्षिप्तं लवणार्णवे ॥ ५७ ॥ स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात् । यत एवागतं पापं तत्रैव प्रतिगच्छतु ॥ ५८ ॥ एतद्रोगादिपीडासु जन्तूनां हितकाम्यया । विष्णुभक्तेन कर्तव्यमपामार्जनकं परम् ॥ ५९ ॥ अनेन सर्वदुःखानि प्रशमं यान्त्यसंशयम् । सर्वभूत-हितार्थाय कुर्यात्तस्मात्सदैव हि ॥ १६० ॥ य इदं धारयेद्विद्वान् श्रद्धाभक्तिसमन्वितः । ग्रहास्तं नोपसर्पन्ति न रोगा न च राक्षसाः ॥ ६१ ॥ धन्यो यशस्वी शत्रुघ्नः स्तवोऽयं मुनिसत्तम । पठतां शृण्वतां चैव ददाति परमां गतिम् ॥१६२॥ इति श्रीविष्णुधर्मोत्तरे विष्णुरहस्ये पुलस्त्यदाल्भ्यसंवादे श्रीविष्णोरपामार्जनस्तोत्रं संपूर्णम् ॥

## ५७. लक्ष्मीनृसिंहाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारसिंहो महासिंहो दिव्यसिंहो महाबलः । उग्रसिंहो महादेवः स्तंभजश्चोग्रलोचनः ॥ १ ॥ रौद्रः सर्वाद्भुतः श्रीमान् योगानन्दस्त्रिविक्रमः । हरिः कोलाहलश्चक्री विजयो जय-वर्धनः ॥ २ ॥ पञ्चाननः परं ब्रह्म चाघोरो घोरविक्रमः । ज्वलन्मुखो ज्वालमाली महाज्वालो महाप्रभुः ॥ ३ ॥ निटिलाक्षः सहस्राक्षो दुर्निरीक्ष्यः प्रतापनः । महादंष्ट्रायुधः प्राज्ञश्चंडकोपी सदाशिवः ॥ ४ ॥ हिरण्यकशिपुध्वंसी दैत्यदानवभञ्जनः । गुणभद्रो महाभद्रो बलभद्रः सुभद्रकः ॥ ५ ॥ करालो विकरालश्च विकर्ता सर्वकर्तृकः । शिंशुमारस्त्रिलोकात्मा ईशः सर्वेश्वरो विभुः ॥ ६ ॥ भैरवाडंबरो दिव्यश्चाच्युतः कविमाधवः । अधोक्षजोऽक्षरः शर्वो वनमाली वरप्रदः ॥ ७ ॥ विश्वंभरोऽद्भुतो भव्यः श्रीविष्णुः पुरुषो-त्तमः । अनघास्त्रो नखास्त्रश्च सूर्यज्योतिः सुरेश्वरः ॥८॥ सहस्रबाहुः

सर्वज्ञः सर्वसिद्धिप्रदायकः । वज्रदंष्ट्रो वज्रनखो महानन्दः परंतपः ॥ ९ ॥ सर्वयंत्रैकरूपश्च सर्वयंत्रविदारणः । सर्वतंत्रात्मकोऽव्यक्तः सुव्यक्तो भक्तवत्सलः ॥ १० ॥ वैशाखशुक्लभूतोत्थशरणागतवत्सलः । उदारकीर्तिः पुण्यात्मा महात्मा चंडविक्रमः ॥ ११ ॥ वेदत्रयप्रपूज्यश्च भगवान्परमेश्वरः । श्रीवत्सांकः श्रीनिवासो जगद्व्यापी जगन्मयः ॥ १२ ॥ जगत्पालो जगन्नाथो महाकायो द्विरूपभृत् । परमात्मा परंज्योतिर्निर्गुणश्च नृकेसरी ॥ १३ ॥ परतत्त्वं परंधाम सच्चिदानन्दविग्रहः । लक्ष्मीनृसिंहः सर्वात्मा धीरः प्रह्लादपालकः ॥ १४ ॥ इदं लक्ष्मीनृसिंहस्य नाम्नामष्टोत्तरं शतम् । त्रिसंध्यं यः पठेद्भक्त्या सर्वाभीष्टमवाप्नुयात् ॥ १५ ॥ इति लक्ष्मीनृसिंहाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

## ५८. श्रीमद्द्वादशस्तोत्रम् ।

श्रीवेदव्यासाय नमः ॥ वंदे वंद्यं सदानंदं वासुदेवं निरंजनम् । इंदिरापतिमाद्यादिवरदेशवरप्रदम् ॥ १ ॥ नमामि निखिलाधीशकिरीटाघृष्टपीठवत् । हृत्तमःशमनेऽर्काभं श्रीपतेः पादपंकजम् ॥ २ ॥ जांबूनदांबराधारं नितंबं चिंत्यमीशितुः । स्वर्णमंजीरसंवीतमारूढं जगदंबया ॥ ३ ॥ उदरं चिंत्यमीशस्य तनुत्वेऽप्यखिलंभरम् । वलित्रयांकितं नित्यमुपगूढं श्रियैकया ॥ ४ ॥ स्मरणीयमुरो विष्णोरिंदिरावासमीशितुः । अनंतमंतवदिव भुजयोरंतरं गतम् ॥ ५ ॥ शंखचक्रगदापद्मधराश्चिंत्या हरेर्भुजाः । पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ॥ ६ ॥ सततं चिंतयेत्कंठं भास्वत्कौस्तुभभासकम् । वैकुंठस्याखिला वेदा उद्गीयंतेऽनिशं यतः ॥ ७ ॥ स्मरेत यामिनीनाथसहस्रामितकांतिमत् । भवतापापनोदीड्यं श्रीपतेर्मुख-

पंकजम् ॥ ८ ॥ पूर्णानन्यसुखोद्भासिमंदस्मितमधीशितुः । गोविंदस्य सदा चिंत्यं नित्यानंदपदप्रदम् ॥ ९ ॥ स्मरामि भवसंतापहानिदामृतसागरम् । पूर्णानंदस्य रामस्य सानुरागावलोकनम् ॥ १० ॥ ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् । भ्रूभंगं पारमेष्ठ्यादिपददायि विमुक्तिदम् ॥ ११ ॥ संततं चिंतयेऽनंतमंतकाले विशेषतः । नैवोदापुर्गृणंतोऽतं यद्गुणानामजादयः ॥ १२ ॥ इति श्रीमद्वादशस्तोत्रे प्रथमोऽध्यायः ॥ १ ॥ सुजनोदधिसंवृद्धिपूर्णचंद्रो गुणार्णवः । अमंदानंदसान्द्रो नः प्रीयतामिंदिरापतिः ॥ १ ॥ रमाचकोरीविधवे दुष्टदर्पोदवह्नये । सत्पांथजनगेहाय नमो नारायणाय ते ॥ २ ॥ चिदचिद्भेदमखिलं विधायाधाय भुंजते । अव्याकृतगृहस्थाय रमाप्रणयिने नमः ॥ ३ ॥ अमंदगुणसारोऽपि मंदहासेन वीक्षितः । नित्यमिंदिरयानंदसांद्रो यो नौमि तं हरिम् ॥ ४ ॥ वशी वशो न कस्यापि योऽजितो विजिताखिलः । सर्वकर्ता न क्रियते तं नमामि रमापतिम् ॥ ५ ॥ अगुणाय गुणोद्रेकस्वरूपायादिकारिणे । विदारितारिसंघाय वासुदेवाय ते नमः ॥ ६ ॥ आदिदेवाय देवानां पतये सादितारये । अनाद्यज्ञानपाराय नमो वरवराय ते ॥ ७ ॥ अजाय जनयित्रेऽस्य विजिताखिलदानव । अजादिपूज्यपादाक नमस्ते गरुडध्वज ॥ ८ ॥ इंदिरामंदसांद्राग्र्यकटाक्षप्रेक्षितात्मने । अस्मादिष्टैककार्याय पूर्णाय हरये नमः ॥ ९ ॥ इति श्रीमद्वादशस्तोत्रे द्वितीयोऽध्यायः ॥ २ ॥ कुरु भुंक्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम् । हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ॥ १ ॥ न ततोऽस्त्यपरं जगतीड्यतमं परमात्परतः पुरुषोत्तमतः । तदलं बहुलोकविचिंतनया प्रवणं कुरु मानसमीशपदे ॥ २ ॥ यततोऽपि हरेः पदसंस्मरणे सकलं

ह्यघमाशु लयं व्रजति । स्मरतस्तु विमुक्तिपदं परमं स्फुटमेष्यति तत् किमपाक्रियते ॥ ३ ॥ श्रृणुतामलसत्यवचः परमं शपथेरित-मुच्छ्रितबाहुयुगम् । न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ॥ ४ ॥ यदि नाम परो न भवेत्स हरिः कथमस्य वशे जगदेतदभूत् । यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ॥ ५ ॥ न च कर्मविमामलकालगुणप्रभृतीश-मचित्तनु तद्धि यतः । चिदचित्तनुसर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ॥ ६ ॥ व्यवहारभिदापि गुरोर्जगतां न तु चित्त-गता स हि चोद्यपरम् । बहवः पुरुषाः पुरुषप्रवरो हरिरित्यवद-त्स्वयमेव हरिः ॥ ७ ॥ चतुराननपूर्वविमुक्तगणा हरिमेत्य तु पूर्व-वदेव सदा । नियतोच्चविनीचतयैव निजां स्थितिमापुरिति स्म परं वचनम् ॥ ८ ॥ आनंदतीर्थसंनाम्ना पूर्णप्रज्ञाभिधायुजा । कृतं हर्यष्टकं भक्त्या पठतः प्रीयते हरिः ॥ ९ ॥ इति श्रीमद्भगवत्पादा-चार्यविरचिते द्वादशस्तोत्रे तृतीयोऽध्यायः ॥ ३ ॥ निजपूर्णसुखा-मितबोधतनुः परशक्तिरनंतगुणः परमः । अजरामरणः सकलार्तिहरः कमलापतिरीड्यतमोऽवतु नः ॥ १ ॥ यदसुप्तिगतोऽपि हरिः सुखवान् सुखरूपिणमाहुरतो निगमाः । स्वमतिप्रभवं जगदस्य यतः परबोधतनुं च ततः स्वपतिम् ॥ २ ॥ बहुचित्रजगद्बहुधाकरणात्पर-शक्तिरनंतगुणः परमः । सुखरूपममुष्य पदं परमं स्मरतस्तु भवि-ष्यति तत्सततम् ॥ ३ ॥ स्मरणे हि परेशितुरस्य विभोर्मलिनानि मनांसि कुतः करणम् । विमलं हि पदं परमं स्वरतं तरुणार्क-सवर्णमजस्य हरेः ॥ ४ ॥ विमलैः श्रुतिशाणनिशाततमैः सुमनोसिभिराशु निहत्य दृढम् । बलिनं निजवैरिणमात्म-तमोभिदमीशमनंतमुपास्व हरिम् ॥ ५ ॥ स हि विश्वसृजो विभु-

शंभुपुरंदरसूर्यमुखानपरानमरान् । सृजतीड्यतमोऽवति हंति निजं पदमापयति प्रणतान्सुधिया ॥ ६ ॥ परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्न भविष्यति च । क्वचिदद्यतनोऽपि न पूर्णसदा गणितेड्यगुणानुभवैकतनोः ॥ ७ ॥ इति देववरस्य हरेः स्तवनं कृतवान्मुनिरुत्तममादरतः । सुखतीर्थपदाभिहितः पठतस्तदिदं भवति ध्रुवमुच्चसुखम् ॥ ८ ॥ इति श्रीमद्द्वादशस्तोत्रे चतुर्थोऽध्यायः ॥ ४ ॥ वासुदेवापरिमेयसुधामन् शुद्धसदोदित सुंदरिकांत । धराधरधारण वेधुरधर्तः सौध्रतिदीधितिवेधृविधातः ॥ १ ॥ अधिकबंधं रंधय बोधाच्छिंधि पिधानं बंधुरमद्धा । केशव केशवशासक वंदे पाशधरार्चित शूरवरेश ॥ २ ॥ नारायणामलकारण वंदे कारणकारण पूर्ण वरेण्य । माधव माधवसाधक वंदे बोधकबोधकशुद्धसमाधे ॥ ३ ॥ गोविंद गोविंदपुरंदर वंदे स्कंदसुनंदनवंदितपाद । विष्णो सृजिष्णो ग्रसिष्णो विवंदे कृष्ण सदुष्णवधिष्णो सुधृष्णो ॥ ४ ॥ मधुसूदन दानवसादन वंदे दैवतमोदित वंदितपाद । त्रिविक्रम निष्क्रमविक्रम वंदे सुक्रमसंक्रमहुंकृतवक्र ॥ ५ ॥ वामन वामनभामन वंदे सामन सीमन शामन सानो । श्रीधर श्रीधर शंधर वंदे भूधरवार्धरकंधरधारिन् ॥ ६ ॥ हृषीकेश सुकेश परेश विवंदे शरणेश कलेश बलेश सुखेश । पद्मनाभ शुभोद्भव वंदे संभृतलोकभराभर भूरे ॥ ७ ॥ दामोदर दूरतरांतर वंदे दारितपारगपार परस्मात् ॥ ८ ॥ आनंदतीर्थमुनींद्रकृता हरिगीतिरियं परमादरतः । परलोकविलोकनसूर्यनिभा हरिभक्तिविवर्धनशौंडतमा ॥ ९ ॥ इति श्रीमद्द्वादशस्तोत्रे पंचमोऽध्यायः ॥ ५ ॥ मत्स्यकरूप लयोदविहारिन् वेदविनेतृचतुर्मुखवंद्य । कूर्मस्वरूपक मंदरधारिन् लोकविधारक देव वरेण्य ॥ १ ॥ सूकररूपक दानव-

शत्रो भूमिविधारक यज्ञवरांग । देव नृसिंह हिरण्यकशत्रो सर्वभयांतक दैवतबंधो ॥ २ ॥ वामन वामनमाणववेष दैत्यवरांतक कारणरूप । राम भृगूद्वह सूर्जितदीप्ते क्षत्रकुलांतक शंभुवरेण्य ॥ ३ ॥ राघव राघव राक्षसशत्रो मारुतिवल्लभ जानकीकांत । देवकीनंदन सुंदररूप रुक्मिणीवल्लभ पांडवबंधो ॥ ४ ॥ देवकीनंदन नंदकुमार वृंदावनांचन गोकुलचंद्र । कंदफलाशन सुंदररूप नंदितगोकुल वंदितपाद ॥ ५ ॥ इंद्रसुतावक नंदकहस्त चंदनचर्चित सुंदरिनाथ । इंदीवरोदरदलनयन मंदरधारिन् गोविंद वंदे ॥ ६ ॥ चंद्रशतानन कुंदसुहास नंदितदैवतानंद सुपूर्ण । दैत्यविमोहक नित्यसुखादे देव सुबोधक बुद्धस्वरूप ॥ ७ ॥ दुष्टकुलांतक कल्किस्वरूप धर्मविवर्धन मूलयुगादे । नारायणामलकारणमूर्ते पूर्णगुणार्णव नित्यविबोध ॥ ८ ॥ सुखतीर्थमुनींद्रकृता हरिगाथा पापहरा शुभनित्यसुखार्था ॥ ९ ॥ इति श्रीमद्द्वादशस्तोत्रे षष्ठोऽध्यायः ॥ ६ ॥ विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबंधमोक्षाः । यस्या अपांगलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥१॥ ब्रह्मेशशक्ररविधर्मशशांकपूर्वगीर्वाणसंततिरियं यदपांगलेशम् । आश्रित्य विश्वविजयं विसृजत्यचिंत्या श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ २ ॥ धर्मार्थकामसुमतिप्रचयाद्यशेषसन्मंगलं विदधते यदपांगलेशम् । आश्रित्य तत्प्रणतसत्प्रणता अपीड्य श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ३ ॥ षड्वर्गनिग्रहनिरस्तसमस्तदोषा ध्यायंति विष्णुमृषयो यदपांगलेशम् । आश्रित्य यानपि समेत्य न याति दुःखं श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ४ ॥ शेषाहिवैरिशिवशक्रमनुप्रधानचित्रोरुकर्मरचनं यदपांगलेशम् । आश्रित्य विश्वमखिलं विदधाति धाता श्रीर्यत्कटाक्षबक० ॥ ५ ॥ शक्रोग्रदीधिति-

हिमाकरसूर्यसूनुः पूर्वं निहत्य निखिलं यदपांगलेशम् । आश्रित्य नृत्यति शिवः प्रकटोरुशक्तिः श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ६ ॥ यत्पादपंकजमहासनतामवाप शर्वादिवंद्यचरणो यदपांगलेशम् । आश्रित्य नागपतिरन्यसुरैर्दुरापां श्रीर्यत्कटाक्षबलवत्यजितं० ॥ ७ ॥ नागारिरुग्रबलपौरुष आप विष्णोर्वाहत्वमुत्तमजवो यदपांगलेशम् । आश्रित्य शक्रमुखदेवगणैरचिंत्यं श्रीर्यत्कटाक्षबलवत्य० ॥ ८ ॥ आनंदतीर्थमुनिसन्मुखपंकजोत्थं साक्षाद्रमाहरिमनःप्रियमुत्तमार्थम् । भक्त्या पठत्यजितमात्मनि सन्निधाय यः स्तोत्रमेतदभियाति तयोरभीष्टम् ॥ ९ ॥ इति श्रीमद्द्वादशस्तोत्रे सप्तमोऽध्यायः ॥ ७ ॥ वंदिताशेषवंद्योरुवृंदारकं चंदनाचर्चितोदारपीनांसकम् । इंदिराचंचलापांगनीराजितं मंदरोद्धारिवृत्तोद्भुजाभोगिनम् । प्रीणयामो वासुदेवं देवतामंडलाखंडमंडनम् ॥ १ ॥ सृष्टिसंहारलीलाविलासाततं पुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् । दुष्टनिःशेषसंहारकर्मोद्यतं हृष्टपुष्टानुशिष्टप्रजासंश्रयम् । प्रीणयामो वासुदेवं देवतामंडलाखंडमंडनम् ॥ २ ॥ उन्नतप्रार्थिताशेषसंसाधकं सन्नतालौकिकानंददश्रीप्रदम् । भिन्नकर्माशयप्राणिसंप्रेरकं तन्न किं नेति विद्वत्सु मीमांसितम् । प्रीणयामो वासुदेवं देवतामंडलाखंडमंडनम् ॥ ३ ॥ विप्रमुख्यैः सदा वेदवादोन्मुखैः सुप्रतापैः क्षितीशेश्वरैश्चार्चितम् । अप्रतर्क्योरुसंविद्गुणं निर्मलं सप्रकाशाजरानंदरूपं परम् । प्रीणयामो० ॥ ४ ॥ अत्ययो यस्य केनापि न क्वापि हि प्रत्ययो यद्गुणेषूत्तमानां परः । सत्यसंकल्प एको वरेण्यो वशी मत्यनूनैः सदा वेदवादोदितः । प्रीणयामो वासुदेवं देवतामंडलाखंडमंडनम् ॥ ५ ॥ पश्यतां दुःखसंताननिर्मूलनं दृश्यतां दृश्यतामित्यजेशार्चितम् । नश्यतां दूरगं सर्वदाप्यात्मगं वश्यतां स्वेच्छया सज्जनेष्वागतम् ।

प्रीणयामो० ॥ ६ ॥ अग्रजं यः ससर्जाजमग्र्याकृतिं विग्रहो यस्य सर्वे गुणा एव हि । उग्र आद्योऽपि यस्यात्मजाग्र्यात्मजः सद्गृहीतः सदा यः परं दैवतम् । प्रीणयामो० ॥७॥ अच्युतो यो गुणैर्नित्यमेवाखिलैः प्रच्युतोऽशेषदोषैः सदा पूर्तितः । उच्यते सर्ववेदोरुवादैरजः स्वर्चितो ब्रह्मरुद्रेन्द्रपूर्वैः सदा । प्रीणयामो० ॥ ८ ॥ धार्यते येन विश्वं सदाजादिकं वार्यते शेषदुःखं निजध्यायिनाम् । पार्यते सर्वमन्यैर्न यत्पार्यते कार्यते चाखिलं सर्वभूतैः सदा । प्रीणयामो० ॥ ९ ॥ सर्वपापानि यत्संस्मृतेः संक्षयं सर्वदा यांति भक्त्या विशुद्धात्मनाम् । शर्वगुर्वादिगीर्वाणसंस्थानदः कुर्वते कर्म यत्प्रीतये सज्जनाः । प्रीणयामो० ॥ १० ॥ अक्षयं कर्म यस्मिन्परे स्वर्पितं प्रक्षयं यांति दुःखानि यन्नामतः । अक्षरो योऽजरः सर्वदैवामृतः कुक्षिगं यस्य विश्वं सदाजादिकम् । प्रीणयामो० ॥ ११ ॥ नंदितीर्थोरुसन्नामिनो नंदिनः संदधानाः सदानंददेवे मतिम् । मंदहासारुणापाङ्गदत्तोन्नतिं नंदिताशेषदेवादिवृंदं सदा । प्रीणयामो० ॥१२॥ इति श्रीमद्द्वादशस्तोत्रेऽष्टमोऽध्यायः ॥ ८ ॥ अतिमततमोगिरिसमितिविभेदन पितामहभूतिद गुणगणनिलय । शुभतमकथाशय परम सदोदित जगदेककारण राम रमारमण ॥ १ ॥ विधिभवमुखसुरसततसुवंदित रमामनोवल्लभ भव मम शरणम् । शुभतम० ॥ २ ॥ अगणितगुणगणमयशरीर हे विगतगुणेतर भव मम शरणम् । शुभतम० ॥ ३ ॥ अपरिमितसुखनिधिविमलसुदेह हे विगतसुखेतर भव मम शरणम् । शुभतम० ॥ ४ ॥ प्रचलितलयजलविहरण शाश्वतसुखमयमीन हे भव मम शरणम् । शुभतम० ॥ ५ ॥ सुरदितिज सुबल विलुलित मंदरधरपर कूर्म हे भव मम शरणम् । शुभतम० ॥६॥ सगिरिवरधरातलवह सुसूकर परम विबोध

हे भव मम शरणम् । शुभतम० ॥ ७ ॥ अतिबलदितिसुतहृदयविभेदन जय नृहरेऽमल भव मम शरणम् । शुभतम० ॥ ८ ॥ बलिमुखदितिसुतविजयविनाशन जगदवनाजित भव मम शरणम् । शुभतम० ॥ ९ ॥ अविजितकुनृपतिसमितिविखंडन रमावर वीरप भव मम शरणम् । शुभतम० ॥१०॥ खरतरनिशिचरदहन परामृत रघुवर मानद भव मम शरणम् । शुभतम० ॥ ११ ॥ सुललिततनुवर वरद महाबल यदुवर पार्थप भव मम शरणम् । शुभतम० ॥ १२ ॥ दितिसुतमोहन विमलविबोधन परगुणबुद्ध हे भव मम शरणम् । शुभतम० ॥ १३ ॥ कलिमलहुतवह सुभग महोत्सव शरणद कल्कीश हे भव मम शरणम् । शुभतम० ॥ १४ ॥ अखिलजनिविलय परसुखकारण परपुरुषोत्तम भव मम शरणम् । शुभतम० ॥ १५ ॥ इति तव नुतिवर सततरतेर्भव सुशरणमुरुसुखतीर्थमुनेर्भगवन् ॥ १६ ॥ इति श्रीमद्द्वादशस्तोत्रे नवमोऽध्यायः ॥ ९ ॥

अव नः श्रीपतिरप्रतिरधिकेशादिभवादे । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ १ ॥ सुरवंद्याधिप सद्वरभरिताशेषगुणाऽलम् । करुणा० ॥ २ ॥ सकलध्वांतविनाशक परमानंदसुधा हे । करुणा० ॥ ३ ॥ त्रिजगत्पोत सदार्चितचरणाशापतिधातो । करुणा० ॥ ४ ॥ त्रिगुणातीतविधारक परितो देहि सुभक्तिम् । करुणा० ॥ ५ ॥ शरणं कारणभावन भव मे तात सदाऽलम् । करुणा० ॥ ६ ॥ मरणप्राणद पालक जगदीशाऽव सुभक्तिम् । करुणा० ॥ ७ ॥ तरुणादित्यसवर्णकचरणाब्जामलकीर्ते । करुणा० ॥ ८ ॥ सलिलप्रोत्थसरागकमणिवर्णोच्चनखादे । करुणा० ॥ ९ ॥ कजतूणीनिभ पावन वरजंघामितशक्ते । करुणा० ॥ १० ॥ इभहस्तप्रभ शोभन परमोरःस्थलमाले । करुणा० ॥ ११ ॥ असनोत्फुल्लसुपुष्पकसमवर्णा

वरणांते । करुणा० ॥ १२ ॥ शतमोदोद्भवसुंदरवरपद्मोत्थितनाभे । करुणा० ॥ १३ ॥ जगदंबामलसुंदर गृहवक्षोवरयोगिन् । करुणा० ॥ १४ ॥ जगदागृहकपल्लवसमकुक्षे शरणादे । करुणा० ॥ १५ ॥ दितिजांतप्रद चक्रदरगदायुग्वरबाहो । करुणा० ॥ १६ ॥ परमज्ञान-महानिधिवदन श्रीरमणेंदो । करुणा० ॥ १७ ॥ निखिलाघौघ-विनाशक परसौख्यप्रददृष्टे । करुणा० ॥ १८ ॥ परमानंदसुतीर्थ-मुनिराजो हरिगाथाम् । कृतवान्नित्यसुपूर्णैकपरमानंदपदैषी ॥ १९ ॥ इति श्रीमद्द्वादशस्तोत्रे दशमोऽध्यायः ॥ १० ॥ उदीर्णमजरं दिव्यममृतस्यंद्यधीशितुः । आनंदस्य पदं वंदे ब्रह्मेंद्राद्यभिवंदितम् ॥ १ ॥ सर्ववेदपदोद्गीतमिंदिरावासमुत्तमम् । आनंद० ॥ २ ॥ सर्वदेवादिदेवस्य विदारितमहत्तमः । आनंद० ॥ ३ ॥ उदारमादरा-न्नित्यमनिंद्यं सुंदरीपतेः । आनंद० ॥ ४ ॥ इंदीवरोदरनिभं सुपूर्णं वादिमोहदम् । आनंद० ॥ ५ ॥ दातृसर्वामरैश्वर्यविमुक्त्यादे-रहोवरम् । आनंद० ॥ ६ ॥ दूराद्दूरतरं यत्तु तदेवांतिकमंतिकात् । आनंद० ॥ ७ ॥ पूर्णसर्वगुणैकार्णमनाद्यंतं सुरेशितुः । आनंद० ॥ ८ ॥ आनंदतीर्थमुनिना हरेरानंदरूपिणः ॥ कृतं स्तोत्रमिदं पुण्यं पठन्नानंदतामियात् ॥ ९ ॥ इति श्रीमद्द्वादशस्तोत्रे एकादशोऽध्यायः ॥ ११ ॥ आनंदमुकुंद अरविंदनयन । आनंदतीर्थपरानंदवरद ॥ १ ॥ सुंदरिमंदिरगोविंद वंदे । आ० ॥ २ ॥ चंद्रसुरेंद्रसुवंदित वंदे । आ० ॥ ३ ॥ चंद्रकमंदिरनंदक वंदे । आ० ॥ ४ ॥ वृंदारकवृंदसुवंदित वंदे । आ० ॥ ५ ॥ मंदारसूनसुचर्चित वंदे । आ० ॥ ६ ॥ इंदिरानन्दक सुन्दर वंदे । आनंद० ॥ ७ ॥ मंदिरस्यंदनस्यंदक वंदे । आनंद० ॥ ८ ॥ आनंदचंद्रिकास्यंदक वंदे । आनंद० ॥ ९ ॥ इति श्रीमद्द्वादशस्तोत्रे द्वादश० ॥ १२ ॥ इति श्रीमद्भगवत्पादाचार्यविरचितं श्रीमद्द्वादशस्तोत्रं समाप्तम् ॥

## ५९. संकष्टनाशनलक्ष्मीनृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगींद्रभोगमणिरंजितपुण्यमूर्ते । योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ १ ॥ ब्रह्मेंद्ररुद्रमरुदर्ककिरीटकोटिसंघट्टितांघ्रिकमलामलकांतिकांत । लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह० ॥ २ ॥ संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रचुरार्दितस्य । आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह० ॥ ३ ॥ संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य । दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह० ॥ ४ ॥ संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य । व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह० ॥ ५ ॥ संसारवृक्षमघबीजमनंतकर्मशाखाशतं करणपत्रमनंतपुष्पम् । आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह० ॥ ६ ॥ संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्तेः । नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह० ॥ ७ ॥ संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य । त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह० ॥ ८ ॥ संसारजालपतितस्य जगन्निवास सर्वेन्द्रियार्थबडिशार्थझषोपमस्य । प्रोत्खंडितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह० ॥ ९ ॥ संसारभीकरकरींद्रकराभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश । प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह० ॥ १० ॥ अंधस्य मे हृतविवेकमहाधनस्य चौरैः प्रभो बलिभिरिंद्रियनामधेयैः । मोहांधकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह० ॥ ११ ॥ लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुण्ठ कृष्ण मधुसूदन पुष्कराक्ष । ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य करावलंबम् ॥

यन्मायर्योर्जितवपुःप्रचुरप्रवाहमग्नं शरण्य वितरोरु करावलंबम् ।
लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शङ्करेण
॥ १२ ॥ इति श्रीमच्छंकराचार्यकृतं संकष्टनाशनलक्ष्मीनृसिंहस्तोत्रं
संपूर्णम् ॥

## ६०. गोविन्दाष्टकम् ।

श्रीगणेशाय नमः ॥ सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं गोष्ठप्राङ्गणरिङ्खणलोलमनायासं परमायासम् ॥ मायाकल्पितनानाकारमनाकारं भुवनाकारं क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसंत्रासं व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालम् ॥ लोकत्रयपुरमूलस्तंभं लोकालोकमनालोकं लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥ २ ॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं कैवल्यं नवनीताहारमनाहारं भुवनाहारम् । वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥ ३ ॥ गोपालं भूलीलाविग्रहगोपालं कुलगोपालं गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् । गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं गोपीगोचरदूरं प्रणमत गोविन्दं परमानन्दम् ॥ ४ ॥ गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं शश्वद्गोखुरनिर्धूतोत्कृतधूलीधूसरसौभाग्यम् । श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥ ५ ॥ स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं व्यादित्सन्तीरथ दिग्वस्त्रा ह्युपदातुमुपाकर्षन्तम् । निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरप्यन्तःस्थं सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥ ६ ॥ कान्तं कारणकारणमादिमनादिं कालमनाभासं कालिन्दीगतकालियशिरसि मुहु-

नृत्यन्तं सुनृत्यन्तम् । कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥ ७ ॥ वृन्दावनभुवि वृन्दारकगणवृन्दाराधितमन्देहं कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् । वन्द्याशेषमहामुनिमानसवन्द्यं नन्दपदद्वन्द्वं वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥ ८ ॥ गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो गोविन्दाच्युत माधव विष्णो गोकुलनायक कृष्णेति । गोविन्दांघ्रिसरोजध्यानसुधाजलधौतसमस्ताघो गोविन्दं परमानन्दामृतमन्तःस्थं स समभ्येति ॥ ९ ॥ इति श्रीमत्परमहंसश्रीमच्छङ्कराचार्यविरचितं गोविन्दाष्टकं संपूर्णम् ॥

## ६१. लक्ष्मीनरसिंहपंचरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ त्वत्प्रभुजीव प्रियमिच्छसि चेन्नरहरिपूजां कुरु सततं प्रतिबिम्बालंकृतिधृतिकुशलो बिम्बालंकृतिमातनुते । चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरंदम् ॥ १ ॥ शुक्तौ रजतप्रतिभा जातकटकाद्यर्थसमर्था चेद्दुःखमयी ते संसृतिरेषा निर्वृतिदाने निपुणा स्यात्। चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरंदम् ॥ २ ॥ आकृतिसाम्याच्छाल्मलिकुसुमे स्थलनलिनत्वभ्रममकरोः । गन्धरसाविह किमु विद्येते विफलं भ्राम्यसि भृशविरसेऽस्मिन् । चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरंदम् ॥ ३ ॥ स्रक्चन्दनवनितादीन् विषयान् सुखदान् मत्वा तत्र विहरसे । गन्धफलीसदृशा ननु तेऽमी भोगानन्तरदुःखकृतः स्युः । चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघ-

पदसरसिजमकरंदम् ॥ ४ ॥ तव हितमेकं वचनं वक्ष्ये शृणु सुखकामो यदि सततं स्वप्ने दृष्टं सकलं हि मृषा जाग्रति च स्मर तद्वदिति । चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरंदम् ॥ ५ ॥ इति श्रीमच्छङ्कराचार्यप्रणीतं लक्ष्मीनरसिंहपंचरत्नस्तोत्रं संपूर्णम् ॥

## ६२. ध्रुवकृता भगवत्स्तुतिः ।

श्रीगणेशाय नमः ॥ ध्रुव उवाच ॥ योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना । अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ १ ॥ एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम् । सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि ॥ २ ॥ त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः । तस्यापवर्ग्यशरणं तव पादमूलं विस्मर्यते कृतविदा कथमार्तबंधो ॥ ३ ॥ नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः । अर्चंति कल्पकतरुं कुणपोपभोग्यमिच्छंति यत्स्पर्शजं निरयेऽपि नृणाम् ॥ ४ ॥ या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् किंत्वंतकासिलुलितात् पततां विमानात् ॥ ५ ॥ भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनंत महताममलाशयानाम् । येनांजसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ६ ॥ ते न स्मरंत्यतितरां प्रियमीशमर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः । ये त्वब्जनाभ भवदीयपदारविंद-

सौगंध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ ७ ॥ तिर्यङ्नगद्विजसरीसृपदेव-
दैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् । रूपं स्थविष्ठमज ते मह-
दाद्यनेकं नातः परं परम वेद्मि न यत्र वादः ॥ ८ ॥ कल्पांत एत-
दखिलं जठरेण गृह्णन् शेते पुमान् स्वदृगनंतसखस्तदङ्के । यन्नाभि-
सिंधुरुहकाञ्चनलोकपद्मगर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ ९ ॥
त्वं नित्यमुक्तपरिशुद्धविशुद्ध आत्मा कूटस्थ आदिपुरुषो भगवाँ-
स्त्र्यधीशः । यद्बुद्ध्यवस्थितिमखंडितया स्वदृष्ट्या द्रष्टा स्थितावधि-
मखो व्यतिरिक्त आस्से ॥ १० ॥ यस्मिन् विरुद्धगतयो ह्यनिशं
पतंति विद्यादयो विविधशक्तय आनुपूर्व्यात् । तद्ब्रह्म विश्वभवमेक-
मनंतमाद्यमानंदमात्रमविकारमहं प्रपद्ये ॥ ११ ॥ सत्याशिषो हि
भगवँस्तव पादपद्ममाशीस्तथाऽनुभजतः पुरुषार्थमूर्तेः । अप्येवमार्य
भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १२॥
मैत्रेय उवाच ॥ अथाभिष्टुत एवं वै सत्सङ्कल्पेन धीमता । भृत्या-
नुरक्तो भगवान् प्रतिनंद्येदमब्रवीत् ॥ १३ ॥ श्रीभगवानुवाच ॥
वेदाहं ते व्यवसितं हृदि राजन्यबालक । तत्प्रयच्छामि भद्रं ते
दुरापमपि सुव्रत ॥ १४ ॥ नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुव-
क्षिति । यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ १५ ॥ मेढ्यां
गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम् । धर्मोऽग्निः कश्यपः शुक्रो
मुनयो ये वनौकसः । चरंति दक्षिणीकृत्य भ्रमंतो यत्सतारकाः
॥ १६ ॥ इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः । भुक्त्वा चेहा-
शिषः सत्या अंते मां संस्मरिष्यसि ॥ १७ ॥ ततो गंतासि मत्स्थानं
सर्वलोकनमस्कृतम् । उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः ॥ १८॥
इति ध्रुवकृता भगवत्स्तुतिः संपूर्णा ॥

## ६३. शिवकृतं भगवत्स्तोत्रम् ।

श्रीगणेशाय नमः ॥ शिव उवाच ॥ जितं त आत्मविद्धुर्य स्वस्तये स्वस्तिरस्तु मे । भवता राधसा राद्धे सर्वस्मा आत्मने नमः ॥ १ ॥ नमः पंकजनाभाय भूतसूक्ष्मेंद्रियात्मने । वासुदेवाय शांताय कूटस्थाय स्वरोचिषे ॥ २ ॥ संकर्षणाय सूक्ष्माय दुरंतायांतकाय च । नमो विश्वप्रबोधाय प्रद्युम्नायांतरात्मने ॥ ३ ॥ नमो नमोऽनिरुद्धाय हृषीकेशेंद्रियात्मने । नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ४ ॥ स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः । नमो हिरण्यवीर्याय चातुर्होत्राय तंतवे ॥ ५ ॥ नम ऊर्जइषेत्रय्याःपतये यज्ञरेतसे । तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ६ ॥ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे । नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ७ ॥ अर्थलिंगाय नभसे नमोऽन्तर्बहिरात्मने । नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ८ ॥ प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे । नमो धर्मविपाकाय मृत्यवे दुःखदाय च ॥ ९ ॥ नमस्त आशिषामीश मनवे कारणात्मने । नमो धर्माय बृहते कृष्णायाकुंठमेधसे । पुरुषाय पुराणाय सांख्ययोगेश्वराय च ॥ १० ॥ शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने । चेतआकूतिरूपाय मनोवाचोविभूतये ॥ ११ ॥ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् । रूपं प्रियतमं स्वानां सर्वेंद्रियगुणांजनम् ॥ १२ ॥ स्निग्धप्रावृड्घनःश्यामं सर्वसौंदर्यसंग्रहम् । चार्वायतचतुर्बाहुं सुजातरुचिराननम् ॥ १३ ॥ पद्मकोशपलाशाक्षं सुंदरभ्रु सुनासिकम् । सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ १४ ॥ प्रीतिप्रहसितापांगमलकैरुपशोभितम् । लसत्पंकजकिंजल्कदुकूलं मृष्टकुंडलम् ॥ १५ ॥ स्फुरत्किरीटवलयहारनूपुरमेखलम् । शंखचक्रगदापद्ममालामण्युत्तमर्धिमत् ॥१६॥ सिंह-

स्कंधत्विषो बिभ्रत्सौभाग्यग्रीवकौस्तुभम् । श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ॥ १७ ॥ पूररेचकसंविग्नवलिवल्गुदलोदरम् । प्रतिसंक्रामयद्विश्वं नाभ्यावर्तगभीरया ॥ १८ ॥ श्यामश्रोण्याधिरोचिष्णु दुकूलस्वर्णमेखलम् । समचार्वंघ्रिजंघोरुनिम्नजानुसुदर्शनम् ॥ १९ ॥ पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता । प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ॥ २० ॥ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् । यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ २१ ॥ भवान् भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् । स्वाराज्यस्याप्यभिमत एकांतेनात्मविद्गतिः ॥ २२ ॥ तं दुराराध्यमाराध्यं सतामपि दुरापया । एकांतभक्त्या को वांछेत् पादमूलं विना बहिः ॥ २३ ॥ यत्र निर्विष्टमरणं कृतांतो नाभिमन्यते । विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ २४ ॥ क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् । भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ॥ २५ ॥ अथानघांघ्रेस्तव कीर्तितीर्थयोरंतर्बहिःस्नानविधूतपाप्मनाम् । भूतेष्वनुक्रोशसुसत्त्वशालिनां स्यात्संगमोऽनुग्रह एष नस्तव ॥ २६ ॥ न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् । यद्भक्तियोगानुगृहीतमंजसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ २७ ॥ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् । तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ २८ ॥ यो माययेदं पुरुरूपयाऽसृजद्बिभर्ति भूयः क्षपयत्यविक्रियः । यद्भेदबुद्धिः स दिवात्मदुःस्थया तमात्मतंत्रं भगवन् प्रतीमहि ॥ २९ ॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु जयंति सिद्धये । भूतेंद्रियांतःकरणोपलक्षितं वेदे च तंत्रे च त एव कोविदाः ॥ ३० ॥ त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते । महानहं खं मरु-

दग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ३१ ॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन । अथो विदुस्तं पुरुषं संतमंतर्भुंक्ते हृषीकैर्मधु सारघं यः ॥ ३२ ॥ स एष लोकानतिचंडवेगो विकर्षसि त्वं खलु कालयानः । भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्य ॥ ३३ ॥ प्रमत्तमुच्चैरितिकृत्यचिंतया प्रवृद्धलोभं विषयेषु लालसम् । त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥ ३४ ॥ कस्त्वत्पदाब्जं विजहाति पंडितो यस्तेऽवमानव्ययमानकेतनः । विशंकयास्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥ ३५ ॥ अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम् । विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ३६ ॥ इदं जपत भद्रं वो विशुद्धा नृपनंदनाः । स्वधर्ममनुतिष्ठंतो भगवत्यर्पिताशयाः ॥ ३७ ॥ तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् । पूजयध्वं गृणंतश्च ध्यायंतश्चासकृद्धरिम् ॥ ३८ ॥ इदमाह पुरास्माकं भगवान् विश्वसृक्पतिः । भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ३९ ॥ ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः । अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥ ४० ॥ य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् । अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ४१ ॥ विंदते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम् । मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ४२ ॥ इदं यः कल्य उत्थाय प्रांजलिः श्रद्धयान्वितः । शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबंधनैः ॥ ४३ ॥ इति शिवकृतं भगवत्स्तोत्रं संपूर्णम् ॥

## ६४. अभीतिस्तवः ।

श्रीगणेशाय नमः॥ अभीतिरिह यजुषां यदवधीरितानां भयं भयाभयविधायिनो जगति यन्निदेशे स्थिताः । तदेतदतिलङ्घितद्रुहिण-

शंभुशक्रादिकं रमासखमधीमहे किमपि रंगधुर्यं महः ॥ १ ॥ दयाशिशिरिताशया मनसि मे सदा जागृयुः श्रियाध्युषितवक्षसः श्रितमरुद्वृधा सैकताः । जगदुरितघस्मरा जलधिडिम्भडम्भस्पृहः सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥ २ ॥ यदद्य मितबुद्धिना बहुलमोहभाजा मया गुणग्रथितकायवाङ्मनसि वृत्तिवैचित्र्यतः । अतर्कितहिताहितक्रमविशेषमारभ्यते तदप्युचितमर्चनं परिगृहाण रंगेश्वर ॥ ३ ॥ मरुत्तरणिपावकत्रिदशनाथकालादयः स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः । महत्किमपि वज्रमुद्यतमिवेति यच्छ्रूयते तदत्यनघ यक्षयं य इह तावकस्तावकः ॥ ४ ॥ भवंतमिह यः सुधीर्नियतचेतनाचेतनं पनायति नमस्यति स्मरति वक्ति पर्येति वा । गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥ ५ ॥ स्थिते मनसि विग्रहे गुणिनि धातुसाम्ये सति स्मरेदखिलदेहिनं य इह जातुचित्त्वामजम् । तयैव खलु संधया तमथ दीर्घनिद्रावशं स्वयं विहितसंस्मृतिर्नयसि धाम नैःश्रेयसम् ॥ ६ ॥ रमादयित रंगभूरमण कृष्ण विष्णो हरे त्रिविक्रम जनार्दन त्रियुगनाथ नारायण । इतीव शुभदानि यः पठति नामधेयानि ते न तस्य यमवश्यता नरकपातभीतिः कुतः ॥ ७ ॥ कदाचिदपि रंगभूरसिक यत्र देशे वशी त्वदेकनियताशयस्त्रिदशवंदितो वर्तते । तदक्षततपोवनं तव च राजधानी स्थिरा सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥ ८ ॥ त्रिवर्गपथवर्तिनां त्रिगुणलंघनोद्योगिनां द्विषत्प्रमथनार्थिनामपि च रंगदृश्योदयाः । स्खलत्समयकातरीहरणजागरूकाः प्रभो करग्रहणदीक्षिताः क इह तेन दिव्या गुणाः ॥ ९ ॥ बिभेति भवभृत्प्रभो त्वदुपदेशतीव्रौषधात्कदध्वरसदुर्विषे बडिशभक्ष्यवद्धीयते । अपथ्यपरिहारधीविमुख-

मित्थमाकस्मिकी तमप्यवसरे क्रमाद्भवति वत्सला त्वद्दया ॥ १० ॥ अपार्थ इति निश्चितः प्रहरणादियोगस्तव स्वयं वदसि निर्भयस्तदपि रंग पृथ्वीपते । स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं यदात्थ परमार्थविन्नियतमंतरात्मेति ते ॥ ११ ॥ लघिष्ठसुखसंगतैः स्वकृत-कर्मनिर्वर्तितैः कलत्रसुतसोदरानुचरबंधुसंबन्धिभिः । धनप्रभृति-कैरपि प्रचुरसीतिभेदोत्तरैर्न बिभ्रति धृतिं विभो त्वदनुभूतिभोगा-र्थिनः ॥ १२ ॥ न वक्तुमपि शक्यते नरकगर्भवासादिकं वपुश्च बहुधातुकं निपुणचिन्तने तादृशम् । त्रिविष्टपमुखं तथा तव पदस्य देदीप्यतः किमत्र न भयास्पदं भवति रंग पृथ्वीपते ॥ १३ ॥ भवन्ति सुखभेदतो भयनिदानमेव प्रभो शुभाशुभविकल्पिता जगति देशकालादयः । इति प्रचुरसाध्वसे मयि दयिष्यसे त्वं न चेत्क इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ १४ ॥ सकृत्प्रपद-नस्पृशामभयदाननित्यव्रती न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः । यथोक्तकरणं विदुस्तव तु यातुधानादयः कथं वितथ-मस्तु तत्कृपणसार्वभौमे मयि ॥ १५ ॥ अनुक्षणसमुत्थिते दुरित-वारिधौ दुस्तरे यदि क्वचन निष्कृतिर्भवति सापि दोषाविला । तदित्थमगतौ मयि प्रतिविधानमाधीयतां स्वबुद्धिपरिकल्पितं किमपि रंगधुर्य त्वया ॥ १६ ॥ विषादबहुलादहं विषयवर्गतो दुर्जयाद्बि-भेमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः । मया नियतनाथवानयमिति त्वमर्थापयन् दयाघन जगत्पते दयित रंग संरक्ष माम् ॥ १७ ॥ निसर्गनिरनिष्टता तव निरम्भसः श्रूयते ततस्त्रियुगसृष्टिवद्भवति संहृतिः क्रीडितम् । तथापि शरणागतप्रणयभङ्गभीतो भवान् मदिष्टमिह यद्भवेत्किमपि मा स्म तज्जह्यपः ॥ १८ ॥ कपाधुसुत-वायसद्विरदपुङ्गवद्रौपदीविभीषणभुजङ्गमव्रजगणाम्बरीषादयः । भव-

त्वदसमाश्रिता भयविमुक्तिमापुर्यथा लभेमहि तथा वयं सपदि रंगधुर्यं त्वया ॥ १९ ॥ भयं शमय रंगधाम्न्यनितराभिलाषस्पृशां श्रियं बहुलय प्रभो श्रितविपक्षमुन्मूलय । स्वयं समुदितं वपुस्तव निशामयंतः सदा वयं त्रिदशनिर्वृतिं भुवि मुकुंद विन्देमहि ॥ २० ॥ श्रियः परिवृढे त्वयि श्रितजनस्य संरक्षके सदद्भुतगुणोदधाविति समर्पितोऽयं भरः। प्रतिक्षणमतः परं प्रथय रंगधामादिषु प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥ २१ ॥ कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैस्तुरुष्कयवनादिभिर्जगति जृंभमाणं भयम् । प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः क्षितित्रिदशरक्षकैः क्षपय रंगनाथ क्षणात् ॥ २२ ॥ दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं तमःप्रमथनं प्रभो समुदितास्त्रवृन्दं स्वतः । स्ववृत्तिवशवर्ति तत्त्रिदशवृत्ति चक्रं पुनः प्रवर्तयतु धाम्नि ते महति धर्मचक्रस्थितिम् ॥२३॥ मनुप्रभृतिमानिते महति रंगधामादिके दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः । प्रकृष्टगुणकः श्रिया वसुधया च संधुक्षितः प्रयुक्तकरुणोदधे प्रशमय स्वशक्त्या स्वयम् ॥ २४ ॥ भुजङ्गमविहङ्गमप्रवरसैन्यनाथाः प्रभो तथैव कुमुदादयो नगरगोपुरद्वारपाः । अचिन्त्यबलविक्रमास्त्वमिव रंग संरक्षका जितं त इति वादिनो जगदनुग्रहे जाग्रतु ॥ २५ ॥ विधित्रिपुरमर्दनत्रिदशपुंगवः पावको यमप्रभृतयोऽपि यद्विमतरक्षणे न क्षमाः । रिरक्षिषति यत्र च प्रतिभयं न किंचित्क्वचित्स नः प्रतिभटान्प्रभो शमय रंगधामादिषु ॥ २६ ॥ स कैटभतमोरविर्मधुपरागझञ्झामरुद्धिरण्यगिरिदारणत्रुटितकालनेमिद्रुमः । किमत्र बहुना भजद्भवपयोधिमुष्टिन्धयस्त्रिविक्रम भवत्क्रमः क्षिपतु मंक्षु रंगद्विषः ॥ २७ ॥ यतिप्रवरभारतीरसभरेण नीतं वयः प्रफुल्लपलितं शिरः पदमिह क्षमं प्रार्थये । निरस्तरिपुसंभवे क्वचन

रंगमुख्ये विभो परस्परहितैषिणां परिसरेषु मां वर्तय ॥ २८ ॥ प्रबुद्धगुरुवीक्षणप्रथितवेंकटेशोद्भवामिमामभयसिद्धये पठत रंगभर्तुः स्तुतिम् । भयं त्यजत भद्रमित्यभिदधत्स वः केशवः स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥ २९ ॥ इति श्रीमद्वेंकटनाथप्रणीतोऽभीतिस्तवः संपूर्णः ॥

## ६५. मुरारिपञ्चरत्नम् ।

श्रीगणेशाय नमः ॥ यत्सेवनेन पितृमातृसहोदराणां चित्तं न मोहमहिमा मलिनं करोति । इत्थं समीक्ष्य तव भक्तजनान् मुरारे मूकोऽस्मि तेऽङ्घ्रिकमलं तदतीव धन्यम् ॥ १ ॥ ये ये विलग्नमनसः सुखमाप्तुकामास्ते ते भवंति जगदुद्भवमोहशून्याः । दृष्ट्वा विनष्टधनधान्यगृहान् मुरारे मूको० ॥२॥ वस्त्राणि दिग्वलयमावसतिः श्मशाने पात्रं कपालमपि मुंडविभूषणानि । रुद्रे प्रसादमचलं तव वीक्ष्य शौरे मूको० ॥ ३ ॥ यत्कीर्तिगायनपरस्य विधातृसूनोः कौपीनमैणमजिनं विपुलां विभूतिम् । स्वस्यार्थदिग्भ्रमणमीक्ष्य तु सार्वकालं मूको० ॥ ४ ॥ यद्वीक्षणे धृतधियामशनं फलादि वासोऽपि निर्जनवने गिरिकंदरासु । वासांसि वल्कलमयानि विलोक्य चैवं मूको० ॥ ५ ॥ स्तोत्रं पादांबुजस्यैतच्छ्रीशस्य विजितेंद्रियः । पठित्वा तत्पदं याति श्लोकार्थज्ञस्तु यो नरः ॥ ६ ॥ इति मुरारिपञ्चरत्नं संपूर्णम् ॥

## ६६. श्रीहरिप्रातःस्मरणम् ।

श्रीगणेशाय नमः ॥ ग्राहग्रस्ते गजेंद्रे रुवति सरभसं तार्क्ष्यमारुह्य धावन् व्याघूर्णन्माल्यभूषावसनपरिकरो मेघगंभीरघोषः । आबिभ्राणो रथांगं शरमसिमभयं शंखचापौ सखेटौ हस्तैः कौमोदकीमप्यवतु हरिरसावंहसां संहतेर्नः ॥ १ ॥ नक्राक्रांते करींद्रे मुकुलितनयने

मूलमूलेऽतिखिन्ने नाहं नाहं न चाहं न च भवति पुनस्तादृशो माहृशेषु। इत्येवं त्यक्तहस्ते सपदि सुरगणे भावशून्ये समस्ते मूलं यत्प्रादुरासीत्स दिशतु भगवान् मंगलं संततं नः ॥ २ ॥ प्रातः स्मरामि भवभीतिमहार्तिशांत्यै नारायणं गरुडवाहनमब्जनाभम्। ग्राहाभिभूतमदवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ ३ ॥ प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविंदयुगलं परमस्य पुंसः। नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥ ४ ॥ प्रातर्भजामि भजतामभयंकरं तं प्राक्सर्वजन्मकृतपापभयापनुत्यै। यो ग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशनकरो धृतशंखचक्रः ॥५॥ श्लोकत्रयमिदं पुण्यं प्रातरुत्थाय यः पठेत्। लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥ इति श्रीहरिप्रातःस्मरणं संपूर्णम् ॥

## ६७. जगन्नाथाष्टकम्।

श्रीगणेशाय नमः। कदाचित्कालिंदीतटविपिनसंगीतकवरो मुदा गोपीनारीवदनकमलास्वादमधुपः। रमाशंभुब्रह्मामरपतिगणेशार्चितपदो जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ १ ॥ भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे दुकूलं नेत्रांते सहचरकटाक्षं विदधते। सदा श्रीमद्वृंदावनवसतिलीलापरिचयो जगन्नाथस्वामी० ॥ २ ॥ महांभोधेस्तीरे कनकरुचिरे नीलशिखरे वसन् प्रासादांतःसहजबलभद्रेण बलिना। सुभद्रामध्यस्थः सकलसुरसेवावसरदो जगन्नाथस्वामी० ॥ ३ ॥ कृपापारावारः सजलजलदश्रेणिरुचिरो रमावाणीसोमस्फुरदमलपद्मोद्भवमुखैः। सुरेंद्रैराराध्यः श्रुतिगणशिखागीतचरितो जगन्नाथस्वामी० ॥ ४ ॥ रथारूढो गच्छन् पथि मिलितभूदेवपटलैः स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः। दयासिंधुर्बंधुः सकलजगतां सिंधुसुतया जगन्नाथस्वामी० ॥ ५ ॥

परब्रह्मापीडः कुवलयदलोत्फुल्लनयनो निवासी नीलाद्रौ निहित-चरणोऽनंतशिरसि । रसानंदो राधासरसवपुरालिङ्गनसुखो जगन्नाथस्वामी० ॥ ६ ॥ न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवं न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् । सदा काले काले प्रमथपतिना गीतचरितो जगन्नाथस्वामी० ॥ ७ ॥ हर त्वं संसारं द्रुततरमसारं सुरपते हर त्वं पापानां विततिमपरां यादवपते । अहो दीनानाथं निहितमचलं पातुमचलं जगन्नाथस्वामी नयनपथगामी भवतु मे ॥ ८ ॥ इति श्रीशङ्कराचार्यप्रणीतं जगन्नाथाष्टकं संपूर्णम् ॥

## ६८. रमापतिस्मरणम् ।

श्रीगणेशाय नमः ॥ मुकुंदमिंदीवरपत्रनेत्रं नंदात्मजं योगिमनोनिकेतम् । वृंदारकाभिष्टुतपादपद्मं पार्थस्य मित्रं मनसा स्मरामि ॥ १ ॥ ब्रह्मेंद्रगंगाधरवंदिताय मुकुंददेवाय परात्पराय । नमः समस्तासुरनाशकाय पक्षीशयानाय रमेश्वराय ॥ २ ॥ आश्लिष्टराधाकुचकुड्मलाय गोपालकृष्णाय नमोऽस्तु तस्मै । गोवर्धनं यो गिरिमुच्चशृंगं लोकोपकाराय किलोद्दधार ॥ ३ ॥ कृपानिधे दीनशरण्य ! शौरे दैत्याटवीदाव रमेश देव । त्वत्पादपंकेरुहयुग्मसेवां नक्तंदिवं प्राप्तुमहं समीहे ॥ ४ ॥ तदा मम स्यादभिलाषसिद्धिस्तदैव जायेत ममातिमोदः । यदा यतींद्रैर्डितसच्चरित्रो मयि प्रसन्नो भगवान् मुरारिः ॥५॥ कुशाग्रसूक्ष्मापि मतिर्यतीनां ज्ञातुं न शक्नोति तव स्वरूपम् । अहं कथं वा मुसलाग्रबुद्धिर्ज्ञातुं क्षमः स्यां खलु तं भवंतम् ॥ ६ ॥ नाहं नदीष्णो निखिलागमेषु न च प्रवीणः कविताकलायाम् । तस्मादशेषान् गदितुं गुणांस्ते शौरे न शक्तो बत मंदभाग्यः ॥ ७ ॥ इति रमापतिस्मरणं संपूर्णम् ॥

## ६९. जगन्नाथपञ्चकम् ।

श्रीगणेशाय नमः । रक्तांभोरुहदर्पभं जनमहासौंदर्यनेत्रद्वयं मुक्ताहारविलम्बिहेममुकुटं रत्नोज्ज्वलत्कुंडलम् । वर्षामेघसमाननीलवपुषं ग्रैवेयहारान्वितं पार्श्वे चक्रधरं प्रसन्नवदनं नीलाद्रिनाथं भजे ॥ १ ॥ फुल्लेंदीवरलोचनं नवघनश्यामाभिरामाकृतिं विश्वेशं कमलाविलासविलसत्पादारविन्दद्वयम् । दैत्यारिं सकलेंदुमण्डितमुखं चक्राब्जतम्बद्वयं वन्दे श्रीपुरुषोत्तमं प्रतिदिनं लक्ष्मीनिवासालयम् ॥ २ ॥ उद्यन्नीरदनीलसुंदरतनुं पूर्णेन्दुबिम्बाननं राजीवोत्पलपत्रनेत्रयुगलं कारुण्यवारांनिधिम् । भक्तानां सकलार्तिनाशनकरं चिन्तार्थिचिन्तामणिं वन्दे श्रीपुरुषोत्तमं प्रतिदिनं नीलाद्रिचूडामणिम् ॥ ३ ॥ नीलाद्रौ शङ्खमध्ये शतदलकमले रत्नसिंहासनस्थं सर्वालंकारयुक्तं नवघनरुचिरं संयुतं चाग्रजेन । भद्राया वामभागे रथचरणयुतं ब्रह्मरुद्रेंद्रवंद्यं वेदानां सारमीशं सुजनपरिवृतं ब्रह्मदारुं स्मरामि ॥ ४ ॥ दोर्भ्यां शोभितलाङ्गलं समुसलं कादंबरीचञ्चलं रत्नाढ्यं वरकुंडलं भुजबलैराक्रान्तभूमंडलम् । वज्राभामलचारुगण्डयुगलं नागेन्द्रचूडोज्ज्वलं संग्रामे चपलं शशाङ्कधवलं श्रीकामपालं भजे ॥ ५ ॥ इति जगन्नाथपञ्चकं संपूर्णम् ॥

## ७०. भक्तेच्छापूर्तिकरं हरिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ एकं वेगवती मध्ये हस्तिशैले च दृश्यते । उपायफलभावेन स्वयं व्यक्तं परं महः ॥ १ ॥ इष्टं गमयितुं पारमेष सेतुरभंगुरः । यत्र सारस्वतं स्रोतो विश्राम्यति विशृंखलम् ॥ २ ॥ जयति जगदेकसेतुर्वेगवती मध्यलक्षितो देवः । प्रशमयति यः प्रजानां प्रथितः संसारजलधिकल्लोलान् ॥ ३ ॥ विभातु मे चेतसि

विष्णुसेतुर्वेगापगावेगविघातहेतुः । अंभोजयोनेर्यदुपज्ञमासीद्भंग-
रक्षाह्वयमेधदीक्षा ॥ ४ ॥ चतुराननसप्ततंतुगोप्ता समये तत्परि-
पंथिनो निरुंधन् । परिपुष्यति मंगलानि पुंसां भगवान् भक्तिमतां
यथोक्तकारी ॥ ५ ॥ श्रीमान् पितामहवधूपरिचर्यमाणः शेते भुजंग-
शयने समहाभुजंगः । प्रत्यादिशंति भवसंचरणं प्रजानां भक्तानुगंतु-
रिह तस्य गतागतानि ॥ ६ ॥ प्रशमितहयमेधव्यापदं पद्मयोनेः श्रित-
जनपरतंत्रं शेषभोगे शयानम् । शरणमुपगताः स्म शांतनिःशेषदोषं
शतमखमणिसेतुं शाश्वतं वेगवत्याः ॥ ७ ॥ शरणमुपगतानां सोऽय-
मादेशकारी शमयति परितापं संमुखः सर्वजंतोः । शतगुणपरिणामः
सन्निधौ यस्य नित्यं वरवितरणभूमा वारणाद्रीश्वरस्य ॥ ८ ॥ कांची-
भाग्यं कमलनिलया चेतसोऽभीष्टसिद्धिः कल्याणानां निधिरविकलः
कोऽपि कारुण्यराशिः । पुण्यानां नः परिणतिरसौ भूषयन् भोगि-
शय्यां वेगासेतुर्जयति विपुलो विश्वरक्षैकहेतुः ॥ ९ ॥ वेगासेतोरिदं
स्तोत्रं वेंकटेशेन निर्मितम् । ये पठंति जनास्तेषां यथोक्तं कुरुते हरिः
॥ १० ॥ इति भक्तेच्छापूर्तिकरं हरिस्तोत्रं संपूर्णम् ॥



# शिवस्तोत्राणि ।



वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अंतर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुगमो निःश्रेयसायास्तु वः ॥

# शिवस्तोत्राणि ।

## ७१. शिवकवचस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशिवकवचस्तोत्रमंत्रस्य ब्रह्मा ऋषिः, अनुष्टुप् छंदः, श्रीसदाशिवरुद्रो देवता, ह्रीं शक्तिः, रं कीलकम्, श्रीं ह्रीं क्लीं बीजम्, श्रीसदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः । अथ न्यासः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐह्रां सर्वशक्तिधाम्ने ईशानात्मने अंगुष्ठाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐनं रिं नित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्जनीभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐमं रुं अनादिशक्तिधाम्ने अघोरात्मने मध्यमाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐशिं रैं स्वतंत्रशक्तिधाम्ने वामदेवात्मने अनामिकाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ वां रौं अलुप्तशक्तिधाम्ने सद्योजातात्मने कनिष्ठिकाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐयं रः अनादिशक्तिधाम्ने सर्वात्मने करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि । अथ ध्यानम् ॥ वज्रदंष्ट्रं त्रिनयनं कालकंठमरिंदमम् । सहस्रकरमत्युग्रं वंदे शंभुमुमापतिम् ॥ १ ॥ अथापरं सर्वपुराणगुह्यं निःशेषपापौघहरं पवित्रम् । जयप्रदं सर्वविपत्प्रमोचनं वक्ष्यामि शैवं कवचं हिताय ते ॥ २ ॥ ऋषभ उवाच ॥ नमस्कृत्वा महादेवं विश्वव्यापिनमीश्वरम् । वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम् ॥ ३ ॥ शुचौ देशे समासीनो यथावत्कल्पितासनः । जितेंद्रियो जितप्राणश्चिंतयेच्छिवमव्ययम् ॥ ४ ॥ हृत्पुंडरीकांतरसन्निविष्टं स्वतेजसा व्याप्तनभोवकाशम् । अतींद्रियं सूक्ष्ममनंतमाद्यं ध्यायेत्परानंदमयं महेशम् ॥ ५ ॥ ध्यानावधूता-

खिलकर्मबंधश्चिरं चिदानंदनिमग्नचेताः। षडक्षरन्याससमाहितात्मा शैवेन कुर्यात्कवचेन रक्षाम् ॥ ६ ॥ मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे । तन्नाम दिव्यं वरमंत्रमूलं धुनोतु मे सर्वमघं हृदिस्थम् ॥ ७ ॥ सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मयानंदघनश्चिदात्मा। अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥ ८ ॥ यो भूस्वरूपेण बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः। योऽपां स्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्यः ॥ ९ ॥ कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः। स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥ १० ॥ प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः। चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्रम् ॥ ११ ॥ कुठारवेदांकुशपाशशूलकपालढक्काक्षगुणान्दधानः । चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥ १२ ॥ कुंदेंदुशंखस्फटिकावभासो वेदाक्षमालावरदाभयांकः। त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योऽधिजातोऽवतु मां प्रतीच्याम् ॥ १३ ॥ वराक्षमालाऽभयटंकहस्तः सरोजकिंजल्कसमानवर्णः। त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ॥ १४ ॥ वेदाभयेष्टांकुशपाशटंककपालढक्काक्षकशूलपाणिः । सितद्युतिः पंचमुखोऽवतान्मामीशान ऊर्ध्वं परमप्रकाशः ॥ १५ ॥ मूर्धानमव्यान्मम चंद्रमौलिर्भालं ममाव्यादथ भालनेत्रः। नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥ १६ ॥ पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली। वक्त्रं सदा रक्षतु पंचवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥ १७ ॥ कंठं गिरीशोऽवतु नीलकंठः पाणिद्वयं पातु पिनाकपाणिः। दोर्मूलमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखां-

तकोऽव्यात् ॥ १८ ॥ ममोदरं पातु गिरींद्रधन्वा मध्यं ममाव्यान्मदनांतकारी । हेरंबतातो मम पातु नाभिं पायात्कटिं धूर्जटिरीश्वरो मे ॥ १९ ॥ ऊरुद्वयं पातु कुबेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात् । जंघायुगं पुंगवकेतुरव्यात् पादौ ममाव्यात्सुरवंद्यपादः ॥ २० ॥ महेश्वरः पातु दिनादियामे मां मध्ययामेऽवतु वामदेवः । त्रिलोचनः पातु तृतीययामे वृषध्वजः पातु दिनांत्ययामे ॥ २१ ॥ पायान्निशादौ शशिशेखरो मां गंगाधरो रक्षतु मां निशीथे । गौरीपतिः पातु निशावसाने मृत्युंजयो रक्षतु सर्वकालम् ॥ २२ ॥ अंतःस्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु बहिःस्थितं माम् । तदंतरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समंतात् ॥ २३ ॥ तिष्ठंतमव्याद्भुवनैकनाथः पायाद्व्रजंतं प्रमथाधिनाथः । वेदांतवेद्योऽवतु मां निषण्णं मामव्ययः पातु शिवः शयानम् ॥ २४ ॥ मार्गेषु मां रक्षतु नीलकंठः शैलादिदुर्गेषु पुरत्रयारिः । अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥ २५ ॥ कल्पांतकाटोपपटुप्रकोपस्फुटाट्टहासोच्चलिताण्डकोशः । घोरारिसेनार्णवदुर्निवारमहाभयाद्रक्षतु वीरभद्रः ॥ २६ ॥ पत्त्यश्वमातंगघटावरूथसहस्रलक्षायुतकोटिभीषणम् । अक्षौहिणीनां शतमाततायिनां छिंद्यान्मृडो घोरकुठारधारया ॥ २७ ॥ निहंतु दस्यून्प्रलयानलार्चिर्ज्वलत्त्रिशूलं त्रिपुरांतकस्य । शार्दूलसिंहर्क्षवृकादिहिंस्रान् संत्रासयत्वीशधनुः पिनाकः ॥ २८ ॥ दुःस्वप्नदुःशकुनदुर्गतिदौर्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि । उत्पाततापविषभीतिमसद्ग्रहार्तिव्याधींश्च नाशयतु मे जगतामधीशः॥२९॥ ॐनमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सर्वमंत्रस्वरूपाय सर्वयंत्राधिष्ठिताय सर्वतंत्रस्वरूपाय सर्वतत्त्वविदूराय ब्रह्मरुद्रावतारिणे नीलकंठाय पार्वतीमनोहरप्रियाय सोमसूर्या-

त्राहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ १२ ॥ तावतस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड । इति विज्ञाप्य देवेशं त्र्यंबकाख्यं मनुं जपेत् ॥ १३ ॥ नमः शिवाय साम्बाय हरये परमात्मने । प्रणतक्लेशनाशाय योगिनां पतये नमः ॥ १४ ॥ शताङ्गायुर्मन्त्रः । ॐ ह्रीं श्रीं ह्रीं ह्रैं ह्रः हन हन दह दह पच पच गृहाण गृहाण मारय मारय मर्दय मर्दय महामहाभैरव भैरवरूपेण धुनय धुनय कम्पय कम्पय विघ्नय विघ्नय विश्वेश्वर क्षोभय क्षोभय कटुकटु मोहय मोहय हुं फट् स्वाहा इति मन्त्रमात्रेण समाभीष्टो भवति ॥ १५ ॥ इति श्रीमार्कण्डेयपुराणे मार्कण्डेयकृत-महामृत्युञ्जयस्तोत्रं संपूर्णम् ॥

## ९९. मृत्युञ्जयमानसपूजास्तोत्रम् ।

श्रीगणेशाय नमः ॥ कैलासे कमनीयरत्नखचिते कल्पद्रुमूले स्थितं कर्पूरस्फटिकेन्दुसुन्दरतनुं कात्यायनीसेवितम् । गङ्गातुङ्गतरङ्गरञ्जित-जटाभारं कृपासागरं कण्ठालंकृतशेषभूषणममुं मृत्युञ्जयं भावये ॥ १ ॥ आगत्य मृत्युञ्जय चन्द्रमौले व्याघ्राजिनालंकृत शूलपाणे । स्वभक्तसंरक्षणकामधेनो प्रसीद विश्वेश्वर पार्वतीश ॥ २ ॥ भास्वन्मौक्तिकतोरणे मरकतस्तम्भायुतालंकृते सौधे धूपसुवासिते मणिमये माणिक्यदीपाञ्चिते । ब्रह्मेन्द्रामरयोगिपुङ्गवगणैर्युक्ते च कल्पद्रुमैः श्रीमृत्युञ्जय सुस्थिरो भव विभो माणिक्यसिंहासने ॥ ३ ॥ मन्दार-मल्लीकरवीरमाधवीपुन्नागनीलोत्पलचम्पकान्वितैः । कर्पूरपाटीरसुवासितैर्जलैराधत्स्व मृत्युञ्जय पाद्यमुत्तमम् ॥ ४ ॥ सुगन्धपुष्पप्रकरैः सुवासितैर्वियन्नदीशीतलवारिभिः शुभैः । त्रिलोकनाथार्तिहरार्घ्य-मादरागृहाण मृत्युञ्जय सर्ववन्दित ॥ ५ ॥ हिमाम्बुवासितैस्तोयैः शीतलैरतिपावनैः । मृत्युञ्जय महादेव शुद्धाचमनमाचर ॥ ६ ॥

गुडदधिसहितं मधुप्रकीर्णं सुघृतसमन्वितधेनुदुग्धयुक्तम्। शुभकर मधुपर्कमाहर त्वं त्रिनयन मृत्युहर त्रिलोकवन्द्य ॥ ७ ॥ पञ्चास्य शान्त पञ्चास्य पञ्चपातकसंहर। पञ्चामृतस्नानमिदं कुरु मृत्युञ्जय प्रभो ॥ ८ ॥ जगत्त्रयीख्यातसमस्ततीर्थसमाहृतैः कल्मषहारिभिश्च। स्नानं सुतोयैः समुदाचर त्वं मृत्युञ्जयानन्तगुणाभिराम ॥ ९ ॥ आनीतेनातिशुभ्रेण कौशेयेनामरद्रुमात्। मार्जयामि जटाभारं शिव मृत्युञ्जय प्रभो ॥ १० ॥ नानाहेमविचित्राणि चीरचीनाम्बराणि च। विविधानि च दिव्यानि मृत्युञ्जय सुधारय ॥ ११ ॥ विशुद्ध-मुक्ताफलजालरम्यं मनोहरं काञ्चनहेमसूत्रम्। यज्ञोपवीतं परमं पवित्रमाधत्स्व मृत्युञ्जय भक्तिगम्य ॥ १२ ॥ श्रीगन्धं घनसार-कुङ्कुमयुतं कस्तूरिकापूरितं कालेयेन हिमाम्बुना विरचितं मन्दार-संवासितम्। दिव्यं देव मनोहरं मणिमये पात्रे समारोपितं सर्वाङ्गेषु विलेपयामि सततं मृत्युञ्जय श्रीविभो ॥ १३ ॥ अक्षतैर्धवलैर्दिव्यैः सम्यक्तिलसमन्वितैः। मृत्युञ्जय महादेव पूजयामि वृषध्वज ॥ १४ ॥ चम्पकपङ्कजकुन्दैः करवीरमल्लिकाकुसुमैः। विस्तारय निजमुकुटं मृत्युञ्जय पुण्डरीकनयनाप्त ॥ १५ ॥ माणिक्यपादुकाद्वन्द्वे मौनि-हृत्पद्ममन्दिरे। पादौ सत्पद्मसदृशौ मृत्युञ्जय निवेशय ॥ १६ ॥ माणिक्यकेयूरकिरीटहारैः काञ्चीमणिस्थापितकुण्डलैश्च। मञ्जीर-मुख्याभरणैर्मनोज्ञैरङ्गानि मृत्युञ्जय भूषयामि ॥ १७ ॥ गजवदन-स्कन्दधृतेनातिस्वच्छेन चामरयुगेन। गलदलकाननपद्मं मृत्युञ्जय भावयामि हृत्पद्मे ॥ १८ ॥ मुक्तातपत्रं शशिकोटिशुभ्रं शुभप्रदं काञ्चन-दण्डयुक्तम्। माणिक्यसंस्थापितहेमकुम्भं सुरेश मृत्युञ्जय तेऽर्प-यामि ॥ १९ ॥ मणिमुकुरे निष्पटले त्रिजगद्गाढान्धकारसप्ताश्वे। कन्दर्पकोटिसदृशं मृत्युञ्जय पश्य वदनमात्मीयम् ॥ २० ॥ कर्पूरचूर्णं

कपिलाज्यपूतं दास्यामि कालेयसमन्वितैश्च । समुक्षतं पावनगन्धधूपितं मृत्युञ्जयाङ्गं परिकल्पयामि ॥ २१ ॥ वर्तित्रयोपेतमखण्डदीप्त्या तमोहरं बाह्यमथान्तरं च । राज्यं समस्तामरवर्गहृद्यं सुरेश मृत्युञ्जय वंशदीपम् ॥ २२ ॥ राजान्नं मधुरान्वितं च मृदुलं माणिक्यपात्रे स्थितं हिंगूजीरकसन्मरीचमिलितैः शाकैरनेकैः शुभैः । शाकं सम्यगपूपसूपसहितं सद्योघृतेनाप्लुतं श्रीमृत्युञ्जय पार्वतीप्रिय विभो सापोशनं भुज्यताम् ॥ २३ ॥ कूष्माण्डवार्ताकपटोलिकानां फलानि रम्याणि च कारवेल्ल्याः । सुपाकयुक्तानि ससौरभाणि श्रीकण्ठ मृत्युञ्जय भक्षयेश ॥ २४ ॥ शीतलं मधुरं स्वच्छं पावनं वासितं लघु । मध्ये स्वीकुरु पानीयं शिव मृत्युञ्जय प्रभो ॥ २५ ॥ शर्करामिलितं स्निग्धं दुग्धान्नं गोघृतान्वितम् । कदलीफलसंमिश्रं भुज्यतां मृत्युसंहर ॥ २६ ॥ केवलमतिमाधुर्यं दुग्धैः स्निग्धैश्च शर्करामिलितैः । एलामरीचमिलितं मृत्युञ्जय देव भुङ्क्ष्व परमान्नम् ॥ २७ ॥ रम्भाचूतकपित्थकण्टकफलैर्द्राक्षारसस्वादुमत्खर्जूरैर्मधुरेक्षुखण्डशकलैः सन्नारिकेलाम्बुभिः । कर्पूरेण सुवासितैर्गुडजलैर्माधुर्ययुक्तैर्विभो श्रीमृत्युञ्जय पूरय त्रिभुवनाधारं विशालोदरम् ॥ २८ ॥ मनोज्ञरम्भावनखण्डखण्डितान्रुचिप्रदान्सर्षपजीरकांश्च । ससौरभान्सैन्धवसेवितांश्च गृहाण मृत्युञ्जय लोकवन्द्य ॥ २९ ॥ हिंगूजीरकसहितं विमलामलकं कपित्थमतिमधुरम् । बिसखण्डाँल्लवणयुतान्मृत्युञ्जय तेऽर्पयामि जगदीश ॥ ३० ॥ एलाशुण्ठीसहितं दध्यन्नं चारु हेमपात्रस्थम् । अमृतप्रतिनिधिमाढ्यं मृत्युञ्जय भुज्यतां त्रिलोकेश ॥ ३१ ॥ जम्बीरनीराञ्चितशृङ्गबेरं मनोहरानम्लशलाटुखण्डान् । मृदूपदंशान्सहितोपभुङ्क्ष्व मृत्युञ्जय श्रीकरुणासमुद्र ॥ ३२ ॥ नागररामठयुक्तं सुललितजम्बीरनीरसंपूर्णम् ।

मथितं सैन्धवसहितं पिब हर मृत्युञ्जय क्रतुध्वंसिन् ॥ ३३ ॥ मन्दारहेमाम्बुजगन्धयुक्तैर्मन्दाकिनीनिर्मलपुण्यतोयैः । गृहाण मृत्युञ्जय पूर्णकाम श्रीमत्परापोशनमभ्रकेश ॥ ३४ ॥ गगनधुनीविमलजलैर्मृत्युञ्जय पद्मरागपात्रगतैः । मृगमदचन्दनपूर्णं प्रक्षालय चारु हस्तपदयुग्मम् ॥ ३५ ॥ पुन्नागमल्लिकाकुन्दवासितैर्जाह्नवीजलैः । मृत्युञ्जय महादेव पुनराचमनं कुरु ॥ ३६ ॥ मौक्तिकचूर्णसमेतैर्मृगमदघनसारवासितैः पूगैः । पर्णैः स्वर्णसमानैर्मृत्युञ्जय तेऽर्पयामि ताम्बूलम् ॥ ३७ ॥ नीराजनं निर्मलदीप्तिमद्भिर्दीपाङ्कुरैरुज्ज्वलमुच्छ्रितैश्च । घण्टानिनादेन समर्पयामि मृत्युञ्जयाय त्रिपुरान्तकाय ॥ ३८॥ विरिञ्चिमुख्यामरवृन्दवन्दिते सरोजमत्स्याङ्कितचक्रचिह्निते । ददामि मृत्युञ्जय पादपङ्कजे फणीन्द्रभूषे पुनरर्घ्यमीश्वर ॥ ३९ ॥ पुन्नागनीलोत्पलकुन्दजातीमन्दारमल्लीकरवीरपङ्कजैः । पुष्पाञ्जलिं बिल्वदलैस्तुलस्या मृत्युञ्जयाङ्घ्रौ विनिवेशयामि ॥ ४० ॥ पदे पदे सर्वतमोनिकृन्तनं पदे पदे सर्वशुभप्रदायकम् । प्रदक्षिणं भक्तियुतेन चेतसा करोमि मृत्युञ्जय रक्ष रक्ष माम् ॥ ४१ ॥ नमो गौरीशाय स्फटिकधवलाङ्गाय च नमो नमो लोकेशाय स्तुतविबुधलोकाय च नमः । नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो नमो भालाक्षाय स्मरमदविनाशाय च नमः ॥ ४२ ॥ संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् । गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो श्रीमृत्युञ्जय पार्वतीप्रिय सदा मां पाहि सर्वेश्वर ॥ ४३ ॥ सौधे रत्नमये नवोत्पलदलाकीर्णे च तल्पान्तरे कौशेयेन मनोहरेण धवलेनाच्छादिते सर्वशः । कर्पूराञ्चितदीपदीप्तिमिलिते रम्योपधानद्वये पार्वत्याः करपद्मलालितपदं मृत्युञ्जयं भावये ॥ ४४ ॥ चतुश्चत्वारिंशद्वि-

लसदुपचारैरभिमतैर्मनःपद्मे भक्त्या बहिरपि च पूजां शुभकरीम् । करोति प्रत्यूषे निशि दिवसमध्येऽपि च पुमान्प्रयाति श्रीमृत्युञ्जयपदमनेकाद्भुतपदम् ॥ ४५ ॥ प्रातर्लिङ्गमुमापतेरहरहः संदर्शनात्स्वर्गदं मध्याह्ने हयमेधतुल्यफलदं सायन्तने मोक्षदम् । भानोरस्तमये प्रदोषसमये पञ्चाक्षराराधनं तत्कालत्रयतुल्यमिष्टफलदं सद्योऽनवद्यं दृढम् ॥ ४६ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकराचार्यस्य कृतौ श्रीमृत्युञ्जयमानसपूजास्तोत्रं संपूर्णम् ॥

## १००. काशीविश्वनाथस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कण्ठे यस्य लसत्करालगरलं गङ्गाजलं मस्तके वामाङ्गे गिरिराजराजतनया जाया भवानी सती । नन्दिस्कन्दगणाधिराजसहितः श्रीविश्वनाथप्रभुः काशीमन्दिरसंस्थितोऽखिलगुरुर्देयात्सदा मङ्गलम् ॥ १ ॥ यो देवैरसुरैर्मुनीन्द्रतनयैर्गन्धर्वयक्षोरगैर्नागैर्भूतलवासिभिर्द्विजवरैः संसेवितः सिद्धये । या गङ्गोत्तरवाहिनी परिसरे तीर्थैरसंख्यैर्वृता सा काशी त्रिपुरारिराजनगरी देयात्० ॥ २ ॥ तीर्थानां प्रवरा मनोरथकरी संसारपारापरानन्दा नन्दिगणेश्वरैरुपहिता देवैरशेषैः स्तुता । या शंभोर्मणिकुण्डलैककर्णिका विष्णोस्तपोदीर्घिका सेयं श्रीमणिकर्णिका भगवती देयात्० ॥ ३ ॥ एषा धर्मपताकिनी तटरुहासेवावसन्नाकिनी पश्यन्पातकिनी भगीरथतपःसाफल्यदेवाकिनी । प्रेमारूढपताकिनी गिरिसुता सा केकरास्वाकिनी काश्यामुत्तरवाहिनी सुरनदी देयात्० ॥ ४ ॥ विघ्नावासनिवासकारणमहागण्डस्थलालम्बितः सिन्दूरारुणपुञ्जचन्द्रकिरणप्रच्छादिनागच्छविः । श्रीविश्वेश्वरवल्लभो गिरिजया सानन्दकानन्दितः स्मेरास्यस्तव ढुण्ढिराजमुदितो दे० ॥ ५ ॥ केदारः

कलशेश्वरः पशुपतिर्धर्मेश्वरो मध्यमो ज्येष्ठेशो पशुपश्च कन्दुकशिवो विघ्नेश्वरो जम्बुकः। चन्द्रेशो ह्यमृतेश्वरो भृगुशिवः श्रीवृद्धकालेश्वरो मध्येशो मणिकर्णिकेश्वरशिवो दे० ॥ ६ ॥ गोकर्णस्त्वथ भारभूतनुदनुः श्रीचित्रगुप्तेश्वरो यक्षेशस्तिलपर्णसंगमशिवो शैलेश्वरः कश्यपः। नागेशोऽग्निशिवो निधीश्वरशिवोऽगस्तीश्वरस्तारकज्ञानेशोऽपि पितामहेश्वरशिवो दे० ॥ ७ ॥ ब्रह्माण्डं सकलं मनोषितरसै रत्नैः पयोभिर्हरं खेलैः पूरयते कुटुम्बनिलयान् शंभोर्विलासप्रदा। नानादिव्यलताविभूषितवपुः काशीपुराधीश्वरी श्रीविश्वेश्वरसुन्दरी भगवती दे० ॥ ८ ॥ या देवी महिषासुरप्रमथनी या चण्डमुण्डापहा या शुम्भासुररक्तबीजदमनी शक्रादिभिः संस्तुता। या शूलासिधनुःशराभयकरा दुर्गादिसंदक्षिणामाश्रित्याश्रितविघ्नशंसमयतु दे० ॥ ९ ॥ आद्या श्रीर्विकटा ततस्तु विरजा श्रीमङ्गला पार्वती विख्याता कमला विशालनयना ज्येष्ठा विशिष्टानना। कामाक्षी च हरिप्रिया भगवती श्रीघण्टघण्टादिका मौर्या षष्टिसहस्रमातृसहिता दे० ॥ १० ॥ आदौ पञ्चनदं प्रयागमपरं केदारकुण्डं कुरुक्षेत्रं मानसकं सरोऽमृतजलं शावस्य तीर्थं परम्। मत्स्योदर्यथ दण्डखाण्डसलिलं मन्दाकिनी जम्बुकं घण्टाकर्णसमुद्रकूपसहितो दे० ॥ ११ ॥ रेवाकुण्डजलं सरस्वतिजलं दुर्वासकुण्डं ततो लक्ष्मीतीर्थलवाङ्कुशस्य सलिलं कन्दर्पकुण्डं तथा। दुर्गाकुण्डमसीजलं हनुमतः कुण्डप्रतापोर्जितः प्रज्ञानप्रमुखानि वः प्रतिदिनं दे० ॥ १२ ॥ आद्यः कूपवरस्तु कालदमनः श्रीवृद्धकूपोऽपरो विख्यातस्तु पराशरस्तु विदितः कूपः सरो मानसः। जैगीषव्यमुनेः शशाङ्कनृपतेः कूपस्तु धर्मोद्भवः ख्यातः सप्तसमुद्रकूपसहितो दे० ॥ १३ ॥ लक्ष्मीनायकबिन्दुमाधवहरिर्लक्ष्मीनृसिंहस्ततो गोविन्दस्त्वथ गोपि-

काप्रियतमः श्रीनारदः केशवः । गङ्गाकेशववामनाख्यतदनु श्वेतो हरिः केशवः प्रह्लादादिसमस्तकेशवगणो दे० ॥ १४ ॥ लोलार्को विमलार्कमायुखरविः संवर्तसंज्ञो रविर्विख्यातो द्रुपदुःखखोल्कमरुणः प्रोक्तोत्तरार्कौ रविः । गङ्गार्कस्त्वथ वृद्धवृद्धिविबुधा काशीपुरीसंस्थिताः सूर्या द्वादशसंज्ञकाः प्रतिदिनं दे० ॥ १५ ॥ आद्यो ढुण्ढिविनायको गणपतिश्चिन्तामणिः सिद्धिदः सेनाविघ्नपतिस्तु वक्रवदनः श्रीपाशपाणिः प्रभुः । आशापक्षविनायकाप्रषकरो मोदादिकः षड्गुणो लोलार्कादिविनायकाः प्रतिदिनं दे० ॥ १६ ॥ हेरम्बो नलकूबरो गणपतिः श्रीभीमचण्डीगणो विख्यातो मणिकर्णिकागणपतिः श्रीसिद्धिदो विघ्नपः । मुण्डश्चण्डमुखश्च कष्टहरणः श्रीदण्डहस्तो गणः श्रीदुर्गाख्यगणाधिपः प्रतिदिनं दे० ॥ १७ ॥ आद्यो भैरवभीषणस्तदपरः श्रीकालराजः क्रमाच्छ्रीसंहारकभैरवस्त्वथ रुरुश्चोन्मत्तको भैरवः । क्रोधश्चण्डकपालभैरववरः श्रीभूतनाथादयो ह्यष्टौ भैरवमूर्तयः प्रतिदिनं दे० ॥ १८ ॥ आधातोऽम्बिकया सह त्रिनयनः सार्धं गणैर्नन्दितां काशीमाशु विशन् हरः प्रथमतो वार्षध्वजेऽवस्थितः । आयाता दश धेनवः सुकपिला दिव्यैः पयोभिर्हरं व्यातं तद्वृषभध्वजेन कपिलं दे० ॥ १९ ॥ आनन्दाख्यवनं हि चम्पकवनं श्रीनैमिषं खाण्डवं पुण्यं चैत्ररथं त्वशोकविपिनं रम्भावनं पावनम् । दुर्गारण्यमथोऽपि कैरववनं वृन्दावनं पावनं विख्यातानि वनानि वः प्रतिदिनं दे० ॥ २० ॥ अलिकुलदलनीलः कालदंष्ट्राकरालः सजलजलदनीलो व्यालयज्ञोपवीतः । अभयवरदहस्तो डामरोद्दामनादः सकलदुरितभक्षो मङ्गलं वो ददातु ॥ २१ ॥ अर्धाङ्गे विकटा गिरीन्द्रतनयः गौरी सती सुन्दरी सर्वाङ्गे विलसद्विभूतिधवलो कालो विशालेक्षणः । वीरेशः

सहनन्दिभृङ्गिसहितः श्रीविश्वनाथः प्रभुः काशीमन्दिरसंस्थितोऽखिलगुरुर्देयात्सदा मङ्गलम् ॥ २२ ॥ यः प्रातः प्रयतः प्रसन्नमनसा प्रेमप्रमोदाकुलः ख्यातं तत्र विशिष्टपादभुवनेशेन्द्रादिभिर्यत्स्तुतम् । प्रातः प्राङ्मुखमासनोत्तमगतो ब्रूयाच्छृणोत्यादरात् काशीवाससुखान्यवाप्य सततं प्रीते शिवे धूर्जटिः ॥ २३ ॥ इति श्रीमच्छंकराचार्यविरचितं काशीविश्वनाथस्तोत्रं संपूर्णम् ॥

## १०१. शिवाष्टोत्तरनामशतकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवा ऊचुः ॥ जय शम्भो विभो रुद्र स्वयंभो जय शंकर । जयेश्वर जयेशान जय सर्वज्ञ कामद ॥ १ ॥ नीलकण्ठ जय श्रीद श्रीकण्ठ जय धूर्जटे । अष्टमूर्तेऽनन्तमूर्ते महामूर्ते जयानघ ॥ २ ॥ जय पापहरानङ्गनिःसङ्गाभङ्गनाशन । जय त्वं त्रिदशाधार त्रिलोकेश त्रिलोचन ॥ ३ ॥ जय त्वं त्रिपथाधार त्रिमार्ग त्रिभिरूर्जित । त्रिपुरारे त्रिधामूर्ते जयैकत्रिजटात्मक ॥ ४ ॥ शशिशेखर शूलेश पशुपाल शिवाप्रिय । शिवात्मक शिव श्रीद सुहृच्छ्रीशतनो जय ॥ ५ ॥ सर्व सर्वेश भूतेश गिरिश त्वं गिरीश्वर । जयोग्ररूप भीमेश भव भर्ग जय प्रभो ॥ ६ ॥ जय दक्षाध्वरध्वंसिन्नन्धकध्वंसकारक । रुण्डमालिन्कपालिस्त्वं भुजङ्गाजिनभूषण ॥ ७ ॥ दिगम्बर दिशांनाथ व्योमकेश चितापते । जयाधार निराधार भस्माधार धराधर ॥ ८ ॥ देवदेव महादेव देवतेशादिदैवत । वह्निवीर्य जय स्थाणो जयायोनिजसम्भव ॥ ९ ॥ भव शर्व महाकाल भस्माङ्ग सर्पभूषण । त्र्यम्बक स्थपते वाचांपते भो जगतांपते ॥ १० ॥ शिपिविष्ट विरूपाक्ष जय लिङ्ग वृषध्वज । नीललोहित पिङ्गाक्ष जय खट्वाङ्गमण्डन ॥ ११ ॥ कृत्तिवास अहिर्बुध्न्य मृडानीश जटाम्बुभृत् । जगद्भ्रातर्जगन्मात-

जगत्तात जगद्गुरो ॥ १२ ॥ पञ्चवक्त्र महावक्त्र कालवक्त्र गजास्यभृत् । दशबाहो महाबाहो महावीर्य महाबल ॥ १३ ॥ अघोरघोरवक्त्र त्वं सद्योजात उमापते । सदानन्द महानन्द नन्दमूर्ते जयेश्वर ॥ १४ ॥ एवमष्टोत्तरशतं नाम्नां देवकृतं तु ये । शम्भोर्भक्त्या स्मरन्तीह शृण्वन्ति च पठन्ति च ॥ १५ ॥ न तापास्त्रिविधास्तेषां न शोको न रुजादयः । ग्रहगोचरपीडा च तेषां क्वापि न विद्यते ॥ १६ ॥ श्रीः प्रज्ञाऽऽरोग्यमायुष्यं सौभाग्यं भाग्यमुन्नतिम् । विद्या धर्मे मतिः शम्भोर्भक्तिस्तेषां न संशयः ॥ १७ ॥ इति श्रीस्कन्दपुराणे सह्याद्रिखण्डे शिवाष्टोत्तरनामशतकस्तोत्रं संपूर्णम् ॥

## १०२. शिवस्तवराजः ।

श्रीगणेशाय नमः ॥ सूत उवाच ॥ एकदा नारदो योगी परानुग्रहतत्परः । विमत्सरो वीतरागो ब्रह्मलोकमुपाययौ ॥ १ ॥ तत्र दृष्ट्वा समासीनं विधातारं जगत्पतिम् । प्रणम्य शिरसा भूमौ कृताञ्जलिरभाषत ॥ २ ॥ नारद उवाच ॥ ब्रह्मञ्जगत्पते तात नतोऽस्मि त्वत्पदाम्बुजम् । कृपया परया देव यत्पृच्छामि तदुच्यताम् ॥ ३ ॥ श्रुतिशास्त्रपुराणानि त्वदास्यात्संश्रुतानि च । तथापि मन्मनो याति संदेहं मोहकारणम् ॥ ४ ॥ सर्वमन्त्राधिको मन्त्रः सदा जाप्यः क उच्यते । सर्वध्यानादिकं ध्यानं सदा ध्येयमिहास्ति किम् ॥ ५ ॥ वेदोपनिषदां सारमायुःश्रीजयवर्धनम् । मुक्तिकाङ्क्षापरैर्नित्यं कः स्तवः पठ्यते बुधैः ॥ ६ ॥ इमं मत्संशयं तात त्वं भेत्तासि न कश्चन । ब्रूहि कारुण्यभावेन मह्यं शुश्रूषवे हितम् ॥ ७ ॥ श्रुत्वाऽङ्गजवचो वेधा हृदि हर्षमुपागतः । देवदेवं शिवाकान्तं नत्वा चाह मुनीश्वरम् ॥ ८ ॥ ब्रह्मोवाच ॥ साधु पृष्टं महाप्राज्ञ लोकानुग्रह-

तत्पर । तत्सर्वं ते प्रवक्ष्यामि गोपनीयं प्रयत्नतः ॥ ९ ॥ प्रणवं पूर्वमुच्चार्य नमःशब्दं समुच्चरेत् । सचतुर्थ्येकवचनं शिवं चैव समुच्चरेत् ॥ १० ॥ एष शैवो महामन्त्रः षड्वर्णाख्यो विमुक्तिदः । सर्वमन्त्राधिकः प्रोक्तः शिवेन ज्ञानरूपिणा ॥ ११ ॥ अनेन मन्त्रराजेन नाशयितुं न शक्यते । तच्च पापं न पश्यामि मार्गमाणोऽपि सर्वदा ॥ १२ ॥ अयं संसारदावाग्निर्मोहसागरवाडवः । तस्मात्प्रयत्नतः पुत्र मन्त्रो ग्राह्यो मुमुक्षुभिः ॥ १३ ॥ मातृपुत्रादिहा योऽपि वेदधर्मविवर्जितः । सकृदुच्चरणादस्य सायुज्यमुक्तिमाप्नुयात् ॥ १४ ॥ किं पुनर्वक्ष्यते पुत्र स्वाचारपरिनिष्ठितः । सर्वमन्त्रान्विसृज्य त्वमिमं मन्त्रं सदा जप ॥ १५ ॥ ध्यानं तेऽहं प्रवक्ष्यामि ज्ञात्वा यन्मुच्यते चिरात् । वेदोपनिषदोक्तं च योगगम्यं सनातनम् ॥ १६ ॥ इन्द्रियाणि नियम्यादौ यतवाग्यतमानसः । स्वस्तिकाद्यासनयुतो हृदि ध्यानं समारभेत् ॥ १७ ॥ नाभिनालं हृदिस्थं च पङ्कजं परिकल्पयेत् । रक्तवर्णमष्टदलं चन्द्रसूर्यादिशोभितम् ॥ १८ ॥ समन्तात्कल्पवृक्षेण वेष्टितं कान्तिमत्सदा । तन्मध्ये शंकरं ध्यायेद्देवदेवं जगद्गुरुम् ॥ १९ ॥ कर्पूरसदृशं चन्द्रशेखरं शूलपाणिनम् । त्रिलोचनं महादेवं द्विभुजं भस्मभूषितम् ॥ २० ॥ परार्ध्यभूषणयुतं क्वणन्नूपुरमण्डितम् । सरत्नमेखलाबद्धकटिवस्त्रं सकुण्डलम् ॥ २१ ॥ नीलकण्ठं जटावन्तं सकिरीटं सुशोभितम् । ग्रैवेयादिप्रबन्धाढ्यं पार्वतीसहितं पुरम् ॥ २२ ॥ कृपालुं जगदाधारं स्कन्दादिपरिवेष्टितम् । इन्द्रेण पूजितं यक्षराजेन व्यजितं विभुम् ॥ २३ ॥ प्रेतराजस्तुतं नीरनाथेन नमितं मुहुः । ब्रह्मणा गीयमानं च विष्णुवन्द्यं मुनिस्तुतम् ॥ २४ ॥ ध्यानमेतन्मया ख्यातं सुत वेदान्तशेखरम् । सर्वपापक्षयकरं जयसंपत्तिवर्धनम् ॥ २५ ॥ अनेन सदृशं

सात नास्ति संसारतारकम् । सर्वध्यानादिकं ध्यानं गोपनीयं सुत त्वया ॥ २६ ॥ कायवाङ्मानसोत्थं यत्पापमन्यच्च विद्यते । तत्सर्वं नाशमायाति ध्यानात्सत्यं वचो मम ॥ २७ ॥ वेदशास्त्रपुराणानि सेतिहासानि यानि च । ध्यानस्य तानि सर्वाणि कलां नार्हन्ति षोडशीम् ॥ २८ ॥ प्रेम्णा कुरु महाभाग ध्यानमेतद्विमुक्तिदम् । अथ ते वच्म्यहं योगिन् स्तवं सर्वोत्तमं च यत् ॥ २९ ॥ ब्रह्मास्यैव ऋषिः प्रोक्तोऽनुष्टुप् छन्दः प्रकीर्तितम् । शिवो वै दैवतं प्रोक्तं बीजं मृत्युञ्जयं मतम् ॥ ३० ॥ कीलकं नीलकण्ठश्च शक्तिः प्रोक्ता हरस्तथा । नियोगः सर्वसिद्ध्यर्थं मुक्तिकामार्थं वै मतः ॥ ३१ ॥ शिरस्यास्ये हृदि पदे कक्ष्यां बाह्वोस्तु व्यापके । ऋष्यादीनि क्रमाद्युञ्ज्यात्साङ्गुष्ठाङ्गुलिभिः सुत ॥ ३२ ॥ मन्त्रन्यासं ततः कुर्याच्छृणु चैकाग्रमानसः । षडक्षराणि युञ्जीयादङ्गुष्ठाद्यङ्गुलीषु च ॥ ३३ ॥ हृदये च शिरस्येव शिखायां कवचे यथा । नेत्रत्रये तथाऽस्त्रे च वर्णा ह्येवं च षट् क्रमात् ॥ ३४ ॥ नमः स्वाहा वषट् हुं च वौषट् फट्क्रमो वदेत् । मन्त्रन्यासमिमं कृत्वा स्तवन्यासं समाचरेत् ॥ ३५ ॥ शिवं मृडं पशुपतिं शंकरं चन्द्रशेखरम् । भवं चैव क्रमादेवमङ्गुष्ठादिहृदादिषु ॥ ३६ ॥ सर्वन्यासान्प्रयुञ्जीत चतुर्थीसहितान्सुत । नमोयुतान्क्रमश्चैव शिरसादिषु वर्जयेत् ॥ ३७ ॥ शिवं सर्वात्मकं सर्वपतिं सर्वजनप्रियम् । सर्वदुःखहरं चैव मोहनं गिरिशं भजे ॥ ३८ ॥ कामघ्नं कामदं कान्तं कालमृत्युनिवर्तकम् । कलावन्तं कलाधीशं वन्देऽहं गिरिजापतिम् ॥ ३९ ॥ परेशं परमं देवं परंब्रह्म परात्परम् । परपीडाहरं नित्यं प्रणमामि वृषध्वजम् ॥ ४० ॥ लोकेशं लोकवन्द्यं च लोककर्तारमीश्वरम् । लोकपालं हरं वन्दे धीरं शशिविभूषणम् ॥ ४१ ॥ शिवापतिं गिरिपतिं

सर्वदेवपतिं विभुम् । प्रमथाधिपतिं सूक्ष्मं नौम्यहं शिखि-
लोचनम् ॥ ४२ ॥ भूतेशं भूतनाथं च भूतप्रेतविनाशनम् । भूधरं
भूपतिं शान्तं शूलपाणिमहं भजे ॥ ४३ ॥ कैलासवासिनं रौद्रं
फणिराजविभूषणम् । फणिबद्धजटाजूटं प्रणमामि सदाशिवम्
॥ ४४ ॥ नीलकंठं दशभुजं त्र्यक्षं धूम्रविलोचनम् । दिगंबरं
दिशाधीशं नमामि विषभूषणम् ॥ ४५ ॥ मुक्तीशं मुक्तिदं मुक्तं
मुक्तगम्यं सनातनम् । सत्पतिं निर्मलं शंभुं नतोऽस्मि सकलार्थदम्
॥ ४६ ॥ विश्वेशं विश्वनाथं च विश्वपालनतत्परम् । विश्वमूर्तिं विश्व-
हरं प्रणमामि जटाधरम् ॥ ४७ ॥ गङ्गाधरं कपालाक्षं पञ्चवक्त्रं
त्रिलोचनम् । विद्युत्कोटिप्रतीकाशं वन्देऽहं पार्वतीपतिम् ॥ ४८ ॥
स्फटिकाभं जनार्तिघ्नं देवदेवमुमापतिम् । त्रिपुरारिं त्रिलोकेशं
नतोऽस्मि भवतारकम् ॥ ४९ ॥ अव्यक्तमक्षरं दान्तं मोहसागर-
तारकम् । स्तुतिप्रियं भक्तिगम्यं सदा वन्दे हरिप्रियम् ॥ ५० ॥
अमलं निर्मलं नाथमपमृत्युभयापहम् । भीमयुद्धकरं भीमवरदं तं
नतोऽस्म्यहम् ॥ ५१ ॥ हरिचक्रप्रदं योगिध्येयमूर्तिं सुमङ्गलम् ।
गजचर्माम्बरधरं प्रणमामि विभूतिदम् ॥ ५२ ॥ आनंदकारिणं
सौम्यं सुंदरं भुवनेश्वरम् । काशीप्रियं काशिराजं वरदं प्रणतोऽ-
स्म्यहम् ॥ ५३ ॥ श्मशानवासिनं भव्यं ग्रहपीडाविनाशनम् ।
महान्तं प्रणवं योगं भजेऽहं दीनरक्षकम् ॥ ५४ ॥ ज्योतिर्मयं
ज्योतिरूपं जितक्रोधं तपस्विनम् । अनन्तं स्वर्गदं स्वर्गपालं वन्दे
निरंजनम् ॥ ५५ ॥ वेदवेद्यं पापहरं गुप्तनाथमतीन्द्रियम् ।
सत्यात्मकं सत्यहरं निरीहं तं नतोऽस्म्यहम् ॥ ५६ ॥ द्वीपिचर्मो-
त्तरीयं च शवमूर्धाविभूषणम् । अस्थिमालं श्वेतवर्णं नमामि चन्द्र-
शेखरम् ॥ ५७ ॥ शूलिनं सर्वभूतस्थं भक्तोद्धरणसंस्थितम् । लिङ्ग-

मूर्तिं सिद्धसेव्यं सिद्धसिद्धिप्रदायकम् ॥ ५८ ॥ अनादिनिधनाख्यं तं रामसेव्यं जयप्रदम् । योधादिं यज्ञभोक्तारं वन्दे नित्यं परावरम् ॥ ५९ ॥ अचिन्त्यमचलं विष्णुं महाभागवतोत्तमम् । परम्रं परवेद्यं च वन्दे वैकुंठनायकम् ॥ ६० ॥ आनंदं निर्भयं भक्तवाञ्छितार्थप्रदायकम् । भवानीपतिमाचार्यं वन्देऽहं नन्दिकेश्वरम् ॥ ६१ ॥ सोमप्रियं सोमनाथं यक्षराजनिषेवितम् । सर्वाधारं सुविस्तारं प्रणमामि विभूतिदम् ॥ ६२ ॥ अनन्तनामानमनन्तरूपमनादिमध्यान्तमनादिसत्त्वम् । चिद्रूपमेकं भवनागसिंहं भजामि नित्यं भुवनाधिनाथम् ॥ ६३ ॥ वेदोपगीतं विधुशेखरं च सुरारिनाथार्चितपादपद्मम् । कर्पूरगौरं भुजगेन्द्रहारं जानामि तत्त्वं शिवमेव नान्यम् ॥ ६४ ॥ गणाधिनाथं शितिकंठमाद्यं तेजस्विनं सर्वमनोभिरामम् । सर्वज्ञमीशं जगदात्मकं च पञ्चाननं नित्यमहं नमामि ॥ ६५ ॥ विश्वसृजं नृत्यकरं प्रियं तं विश्वात्मकं विश्वविधूतपापम् । मृत्युञ्जयं भालविलोचनं च चेतः सदा चिन्तय देवदेवम् ॥ ६६ ॥ कपालिनं सर्पकृतावतंसं मनोवचोगोचरमम्बुजाक्षम् । क्षमाम्बुधिं दीनदयाकरं तं नमामि नित्यं भवरोगवैद्यम् ॥ ६७ ॥ सर्वान्तरस्थं जगदादिहेतुं कालज्ञमात्मानमनन्तपादम् । अनन्तबाहूदरमस्तकाक्षं ललाटनेत्रं भज चन्द्रमौलिम् ॥ ६८ ॥ सर्वप्रदं भक्तसुखावहं च पुष्पायुधादिप्रणतिप्रियं च । त्रिलोकनाथं ऋणबन्धनाशं भजस्व नित्यं प्रणतार्तिनाशम् ॥ ६९ ॥ आनन्दमूर्तिं सुखकल्पवृक्षं कुमारनाथं विधृतप्रपञ्चम् । यज्ञादिनाथं परमप्रकाशं नमामि विश्वंभरमीशितारम् ॥ ७० ॥ इत्येवं स्तवमाख्यातं शिवस्य परमात्मनः । पापक्षयकरं पुत्र सायुज्यमुक्तिदायकम् ॥ ७१ ॥ सर्वरोगहरं मोक्षप्रदं सिद्धिप्रदायकम् । माङ्गल्यं भुक्तिमुक्त्यादि-

साधनं जयवर्धनम् ॥ ७२ ॥ सर्वस्तवोत्तमं विद्धि सर्ववेदान्तशेखरम् । पठस्वानुदिनं तात प्रेम्णा भक्त्या विशुद्धिकृत् ॥ ७३ ॥ गोहा स्त्रीबालविप्रादिहन्तान्यत्पापकृत्तथा । विश्वासघातचारी च खाद्यपेयादिदूषकः ॥ ७४ ॥ कोटिजन्मार्जितैः पापैरसंख्यातैश्च वेष्टितः । अष्टोत्तरशतात्पाठात् शुद्धो भवति निश्चितम् ॥ ७५ ॥ महारोगयुतो वापि मृत्युग्रहयुतस्तथा । त्रिंशत्तदस्य पठनात्सर्वदुःखं विनश्यति ॥ ७६ ॥ राजवश्ये सहस्रं तु स्त्रीवश्ये च तदर्धकम् । मित्रवश्ये पञ्चशतं पाठं कुर्यात्समाहितः ॥ ७७ ॥ लक्षपाठाद्भवेच्चैव शिव एव न संशयः । बहुना किमिहोक्तेन भावनासिद्धिदायकः ॥ ७८ ॥ पार्वत्या सहितं गिरीन्द्रशिखरे मुक्तामये सुन्दरे पीठे संस्थितमिन्दुशेखरमहन्नाथादिसंसेवितम् । पञ्चास्यं फणिराजकङ्कणधरं गङ्गाधरं शूलिनं त्र्यक्षं पापहरं नमामि सततं पद्मासनस्थं शिवम् ॥ ७९ ॥ इति श्रीपद्मपुराणे ब्रह्मनारदसंवादे शिवस्तवराजः संपूर्णः ॥

## १०३. गौरीगिरीशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चंद्रार्धप्रविभासिमस्तकतटौ तंद्राविहीनौ सदा भक्तौघप्रतिपालने निजतनुच्छायाजितार्कायुतौ । शृङ्गाद्रिस्थविवाहमंडपगतौ कारुण्यवारांनिधी कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ १ ॥ अन्योन्यार्चनतत्परौ मधुरवाक्संतोषितान्योन्यकौ चंद्रार्धाञ्चितशेखरौ प्रणमतामिष्टार्थदौ सत्वरम् । शृंगाद्रिस्थविवाहमंडपगतौ शृङ्गारजन्मावनी कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ २ ॥ सौंदर्येण परस्परं प्रमुदितावन्योन्यचित्तस्थितौ राकाचंद्रसमानवक्त्रकमलौ पादाब्जकालंकृतौ । शृङ्गाद्रिस्थ-

विवाहमंडपगतौ गंगातटावासिनौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ३ ॥ सिंहोक्षाग्र्यगती महोन्नतपदं संप्रापयंतौ नतानंहोराशिनिवारणैकनिपुणौ ब्रह्मोग्रविष्ण्वर्चितौ । शृङ्गाद्रिस्थविवाहमंडपगतौ गांगेयभूषोज्ज्वलौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ४ ॥ कस्तूरीघनसारचर्चिततनू प्रस्तूयमानौ सुरैरस्तूक्त्या प्रणतेष्टपूरणकरौ वस्तूपलब्धिप्रदौ । शृङ्गाद्रिस्थविवाहमंडपगतावंगावधूतेंदुभौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ५ ॥ वाणीनिर्जितहंसकोकिलरवौ पाणीकृताम्भोरुहौ वेणीकेशविनिर्जिताहिचपलौ क्षोणीसमानक्षमौ । शृङ्गाद्रिस्थविवाहमंडपगतौ तुंगेष्टजालप्रदौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ६ ॥ कामापत्तिविभूतिकारणदृशौ सोमार्धभूषोज्ज्वलौ सामाम्नायसुगीयमानचरितौ रामार्चिताङ्घ्रिद्वयौ । शृङ्गाद्रिस्थविवाहमंडपगतौ माणिक्यभूषान्वितौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ७ ॥ दंभाहंकृतिदोषशून्यपुरुषैः संभावनीयौ सदा जंभारातिमुखामरेंद्रविनुतौ कुंभात्मजाद्यर्चितौ । शृङ्गाद्रिस्थविवाहमंडपगतौ वाग्दानदीक्षाधरौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ८ ॥ शापानुग्रहशक्तिदाननिपुणौ तापापनोदक्षमौ सोपानक्रमतोऽधिकारिभिरनुप्राप्यौ क्षमासागरौ । शृङ्गाद्रिस्थविवाहमंडपगतौ लावण्यपाथोनिधी कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ९ ॥ शोणांभोरुहतुल्यपादयुगलौ बाणार्चनातोषितौ वीणाढ्यमुनिगीयमानविभवौ बालारुणाभांबरौ । शृङ्गाद्रिस्थविवाहमंडपगतौ तुल्याधिकैर्वर्जितौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ १० ॥ इति गौरीगिरीशस्तोत्रं संपूर्णम् ॥

## १०४. शिवपादादिकेशान्तवर्णनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कल्याणं वो विधत्तां कटकतटलसत्कल्पवाहीनिकुञ्जक्रीडासंसक्तविद्याधरनिवहवधूगीतरुद्रापदानः । तारैर्हेरम्बनादैस्तरलितनिनदत्तारकारातिकेकी कैलासः शर्वनिर्वृत्यभिजनकपदः सर्वदा पर्वतेन्द्रः ॥ १ ॥ यस्य प्राहुः स्वरूपं सकलदिविषदां सारसर्वस्वयोगं यस्येषुः शार्ङ्गधन्वा समजनि जगतां रक्षणे जागरूकः । मौर्वी दर्वीकराणामपि च परिवृढः पूस्त्रयी सा च लक्ष्यं सोऽव्यादव्याजमस्मानशिवभिदनिशं नाकिनां श्रीपिनाकः ॥ २ ॥ आतङ्कावेगहारी सकलदिविषदामङ्घ्रिपद्माश्रयाणां मातङ्गाद्युग्रदैत्यप्रकरतनुगलद्रक्तधाराक्तधारः । क्रूरः सूरायुतानामपि च परिभवं स्वीयभासा वितन्वन् घोराकारः कुठारो दृढतरदुरिताख्याटवीं पाटयेन्नः ॥ ३ ॥ कालारातेः कराग्रे कृतवसतिरुरःशाणशातो रिपूणां काले काले कुलाद्रिप्रवरतनयया कल्पितस्नेहलेपः । पायान्नः पावकार्चिःप्रसरसखमुखः पापहन्ता नितान्तं शूलः श्रीपादसेवाभजनरसजुषां पालनैकान्तशीलः ॥ ४ ॥ देवस्याङ्काश्रयायाः कुलगिरिदुहितुर्नेत्रकोणप्रचारप्रस्तारानत्युदारान्पिपठिषुरिव यो नित्यमत्यादरेण । आधत्ते भङ्गितुङ्गैरनिशमवयवैरन्तरङ्गं समोदं सोमापीडस्य सोऽयं प्रदिशतु कुशलं पाणिरङ्गः कुरङ्गः ॥ ५ ॥ कण्ठप्रान्तावसज्जत्कनकमयमहाघण्टिकाघोरघोषैः कण्ठारावैरकुण्ठैरपि भरितजगच्चक्रवालान्तरालः । चण्डः प्रोद्दण्डशृङ्गः ककुदकवलितोत्तुङ्गकैलासशृङ्गः कण्ठे कालस्य वाहः शमयतु शमलं शाश्वतः शाक्वरेन्द्रः ॥ ६ ॥ निर्यद्दानाम्बुधारापरिमलतरलीभूतलोलम्बपालीझङ्कारैः शंकराद्रेः शिखरशतदरीः पूरयन्भूरिघोषैः । शार्वः सौवर्णशैलप्रतिमपृथुवपुः सर्वविघ्नापहर्ता शर्वाण्याः पूर्वसूनुः स

भवतु भवतां स्वस्तिदो हस्तिवक्त्रः ॥ ७ ॥ यः पुण्यैर्देवतानां समजनि शिवयोः श्लाघ्यवीर्यैकमत्या यन्नाम्नि श्रूयमाणे दितिजभटघटा भीतिभारं भजन्ते । भूयात्सोऽयं विभूत्यै निशितशरशिखापाटितक्रौञ्चशैलः संसारागाधकूपोदरपतितसमुत्तारकस्तारकारिः ॥ ८ ॥ आरूढः प्रौढवेगप्रविजितपवनं तुङ्गतुङ्गं तुरङ्गं चैलं नीलं वसानः करतलविलसत्काण्डकोदण्डदण्डः । रागद्वेषादिनानाविधमृगपटलीभीतिकृद्भूतभर्ता कुर्वन्नाखेटलीलां परिलसतु मनःकानने मामकीने ॥ ९ ॥ अम्भोजाभ्यां च रम्भारथचरणलताद्वन्द्वकुम्भीन्द्रकुम्भैर्बिम्बेनेन्दोश्च कम्बोरुपरि विलसता विद्रुमेणोत्पलाभ्याम् । अम्भोदेनापि संभावितमुपजनिताडम्बरं शम्बरारेः शम्भोः संभोगयोग्यं किमपि धनमिदं संभवेत्संपदे नः ॥ १० ॥ वेणीसौभाग्यविस्मापिततपनसुताचारुवेणीविलासान्वाणीनिर्धूतवाणीकरतलविधृतोदारवीणाविरावान् । एणीनेत्रान्तभङ्गीनिरसननिपुणापाङ्गकोणानुपासे शोणान्प्राणानुदूढप्रतिनवसुषमाकन्दलानिन्दुमौलेः ॥ ११ ॥ नृत्तारम्भेषु हस्ताहतमुरजधिमीधिक्कृतैरत्युदारैश्चित्तानन्दं विधत्ते सदसि भगवतः संततं यः स नन्दी । चण्डीशाद्यास्तथाऽन्ये चतुरगुणगणप्रीणितस्वामिसत्कारोत्कर्षोद्यत्प्रसादाः प्रमथपरिवृढाः सन्तु संतोषिणो नः ॥ १२ ॥ मुक्तामाणिक्यजालैः परिकलितमहासालमालोकनीयं प्रत्युप्तानर्घरत्नैर्दिशि दिशि भवनैः कल्पितैर्दिक्पतीनाम् । उद्यानैरद्रिकन्यापरिजनवनितामाननीयैः परीतं हृद्यं हृद्यस्तु नित्यं मम भुवनपतेर्धाम सोमार्धमौलेः ॥ १३ ॥ स्तम्भैर्जम्भारिरत्नप्रवरविरचितैः संभृतोपान्तभागं शुम्भत्सोपानमार्गं शुचिमणिनिचयैर्गुम्फितानल्पशिल्पम् । कुम्भैः संपूर्णशोभं शिरसि सुघटितैः शातकुम्भैरपङ्कैः शम्भोः संभावनीयं सकलमुनिजनैः स्वस्तिदं स्यात्सदा नः ॥ १४ ॥

न्यस्तो मध्ये सभायाः परिसरविलसत्पादपीठाभिरामो हृद्यः पादैश्चतुर्भिः कनकमणिमयैरुच्चकैरुज्ज्वलात्मा। वासोरत्नेन केनाप्यधिकमृदुतरेणास्तृतो विस्तृतश्रीपीठः पीडाभरं नः शमयतु शिवयोः स्वैरसंवासयोग्यः ॥ १५ ॥ आसीनस्याधिपीठं त्रिजगदधिपतेरङ्घ्रिपीठानुषक्तौ पाथोजाभोगभाजौ परिमृदुलतलोल्लासिपद्माभिलेख्यौ। पातां पादावुभौ तौ नमदमरकिरीटोल्लसच्चारुहीरश्रेणीशोणायमानोन्नतनखदशकोद्भासमानौ समानौ ॥ १६ ॥ यन्नादो वेदवाचां निगदति निखिलं लक्षणं पक्षिकेतुर्लक्ष्मीसंभोगसौख्यं विरचयति ययोश्चापरे रूपभेदे। शंभोः संभावनीये पदकमलसमासङ्गतस्तुङ्गशोभे माङ्गल्यं नः समग्रं सकलसुखकरे नूपुरे पूरयेताम् ॥ १७ ॥ अङ्गे शृङ्गारयोनेः सपदि शलभतां नेत्रवह्नौ प्रयाते शत्रोरुद्धृत्य तस्माद्विषुधियुगमधो न्यस्तमग्रे किमेतत्। शङ्कामित्थं नतानाममरपरिषदामन्तरंकूरयत्तत्संघातं चारु जङ्घायुगमखिलपतेरंहसां संहरेन्नः ॥ १८ ॥ जानुद्वन्द्वेन मीनध्वजनृवरसमुद्गोपमानेन साकं राजन्तौ राजरम्भाकरिकरकनकस्तम्भसंभावनीयौ। ऊरू गौरीकराम्भोरुहसरससमामर्दनानन्दभाजौ चारू दूरीक्रियेतां दुरितमुपचितं जन्मजन्मान्तरे नः ॥ १९ ॥ आमुक्तानर्घरत्नप्रकरकरपरिष्वक्तकल्याणकाञ्चीदाम्ना बद्धेन दुग्धद्युतिनिचयमुषा चीनपट्टाम्बरेण। संवीते शैलकन्यासुचरितपरिपाकायमाने नितम्बे नित्यं नर्नर्तु चित्तं मम निखिलजगत्स्वामिनः सोममौलेः ॥ २० ॥ सन्ध्याकालानुरज्यद्दिनकरसरुचा कालधौतेन गाढं व्यानद्धः स्निग्धमुग्धः सरससमुदरबन्धेन वीतोपमेन। उद्दीप्रैः स्वप्रकाशैरुपचितमहिमा मन्मथारेरुदारो मध्यो मिथ्यार्थसध्र्यङ् मम दिशतु सदा संगतिं मङ्गलानाम् ॥ २१ ॥ नाभीचक्रालवालान्नवनवसुषमादोहदश्रीपरी-

तादुद्गच्छन्ती पुरस्तादुदरपथमतिक्रम्य वक्षः प्रयान्ती। श्यामा कामागमार्थप्रकथनलिपिवद्भासते या निकामं सा मां सोमार्धमौलेः सुखयतु सततं रोमवल्लीमतल्ली ॥ २२ ॥ आश्लेषेष्वद्रिजायाः कठिनकुचतटीलिप्तकाश्मीरपङ्कव्यासङ्गादुद्यदर्कद्युतिभिरुपचितस्पर्धमुद्दामहृद्यम् । दक्षारातेरूढप्रतिनवमणिमालावलीभासमानं वक्षो विक्षोभिताघं सततनतिजुषां रक्षतादक्षतं नः ॥ २३ ॥ वामाङ्के विस्फुरन्त्याः करतलविलसच्चारुरक्तोत्पलायाः कान्ताया वामवक्षोरुहभरशिखरोन्मर्दनव्यग्रमेकम् । अन्यांस्त्रीनप्युदारान्वरपरशुमृगालंकृतानिन्दुमौलेर्बाहूनाबद्धहेमाङ्गदमणिकटकानन्तरालोकयामः ॥ २४ ॥ सम्भ्रान्तायाः शिवायाः पतिविलयभिया सर्वलोकोपतापात्संविग्नस्यापि विष्णोः सरभसमुभयोर्वारणप्रेरणाभ्याम् । मध्ये त्रैशङ्कवीयामनुभवति दशां यत्र हालाहलोष्मा सोऽयं सर्वापदां नः शमयतु नितरां नीलकण्ठस्य कण्ठः ॥ २५ ॥ हृद्यैरद्रीन्द्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्रीरुद्योतन्त्या नितान्तं धवलधवलया मिश्रितो दंतकांत्या । मुक्तामाणिक्यजालव्यतिकरसदृशा तेजसा भासमानः सद्योजातस्य दद्यादधरमणिरसौ संपदां संचयं नः ॥ २६ ॥ कर्णालंकारनानामणिनिकररुचां संचयैरंचितायां वर्ण्यायां स्वर्णपद्मोदरपरिविलसत्कर्णिकासन्निभायाम् । पद्धत्यां प्राणवायोः प्रणतजनहृदम्भोजवासस्य शंभोर्नित्यं नश्चित्तमेतद्विरचयतु सुखेनासिकां नासिकायाम् ॥ २७ ॥ अत्यंतं भासमाने रुचिरतररुचां संगमात्सन्मणीनामुद्यच्चण्डांशुधामप्रसरनिरसनस्पष्टदृष्टापदाने। भूयास्तां भूतये नः करिवरजयिनः कर्णपाशावलम्बे भक्तालीभालसज्जज्जनिमरणलिपेः कुंडले कुंडले ते ॥ २८ ॥ याम्यां कालव्यवस्था भवति तनुमतां यो मुखं देवतानां येषामाहुः स्वरूपं जगति मुनिवरा देवतानां

त्रयीं ताम् । रुद्राणीवक्त्रपङ्केरुहसततविहारोत्सुकेन्दीवरेभ्यस्तेभ्य-स्त्रिभ्यः प्रणामाञ्जलिमुपरचये त्रीक्षणस्येक्षणेभ्यः ॥ २९ ॥ वामं वामांकगाया वदनसरसिजे व्यावलद्वल्लभाया व्यानम्रेष्वन्यदन्यत्पु-नरलिकभवं वीतनिःशेषरौक्ष्यम् । भूयो भूयोऽपि मोदान्निपतदति-कृपाशीतलं चूतबाणे दक्षारेरीक्षणानां त्रयमपहरतादाशु तापत्रयं नः ॥ ३० ॥ यस्मिन्नर्धेन्दुमुग्धद्युतिनिचयतिरस्कारनिस्तंद्रकांतौ काश्मीरक्षोदसंकल्पितमिव रुचिरं चित्रकं भाति नेत्रम् । तस्मिन्नु-ल्लोलचिल्लीनटवरतरुणीलास्यरंगायमाणे कालारेः फालदेशे विहरतु हृदयं वीतचिंतांतरं नः ॥ ३१ ॥ स्वामिन्गंगामिवांगीकुरु तव शिरसा मामपीत्यर्थयंतीं धन्यां कन्यां खरांशोः शिरसि वहति किन्त्वेष कारुण्यशाली । इत्थं शंकां जनानां जनयदतिघनं कैशिकं कालमेघच्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥ ३२ ॥ शृंगाराकल्पयोग्यैः शिखरिवरसुतासत्सखीहस्तलूनैः सूनैराबद्धमालावलिपरिविलसत्सौरभाकृष्टभृंगम् । तुङ्गं माणिक्य-कान्त्या परिहसितसुरावासशैलेंद्रशृंगं संघं नः संकटानां विघटयतु सदा कांकटीकं किरीटम् ॥ ३३ ॥ वक्राकारः कलङ्की जडतनुरह-मप्यंघ्रिसेवानुभावादुत्तंसत्वं प्रयातः सुलभतरघृणास्यंदिनश्चंद्रमौलेः । तत्सेवंतां जनौघाः शिवमिति निजयाऽवस्थयैव ब्रुवाणं वंदे देवस्य शंभोर्मुकुटसुघटितं मुग्धपीयूषभानुम् ॥ ३४ ॥ कांत्या संफुल्लमल्ली-कुसुमधवलया व्याप्य विश्वं विराजन् वृत्ताकारो वितन्वन् मुहुरपि च परां निर्वृतिं पादभाजाम् । सानन्दं नन्दिदोष्णा मणिकटकवता वाह्यमानः पुरारेः श्वेतच्छत्राख्यशीतद्युतिरपहरतादापदस्तापदा नः ॥ ३५ ॥ दिव्याकल्पोज्ज्वलानां शिवगिरिसुतयोः पार्श्वयोराश्रि-तानां रुद्राणीसत्सखीनामतितरलकटाक्षाञ्चलैरञ्चितानाम् । उद्वेल्ल

द्राहुवल्लीविलसनसमये चामरान्दोलनीनामुद्भूतः कङ्कणालीवलयककलकलो वारयेदापदो नः ॥ ३६ ॥ स्वर्गौकःसुन्दरीणां सुललितवपुषां स्वामिसेवापराणां वल्गाभूषाणि वक्त्राम्बुजपरिविगलन्मुग्धगीतामृतानि। नित्यं नृत्तान्युपासे भुजविधुतिपदन्यासभावावलोकप्रत्युद्यत्प्रीतिमाद्यत्प्रमथनटनटीदत्तसम्भावनानि ॥ ३७ ॥ स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यञ्जयन्मञ्जुवीणास्वानावच्छिन्नतालक्रममम्रुतमिवास्वाद्यमानं शिवाभ्याम्। नानारागातिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धं गानं वीणामहर्षेः कलमतिललितं कर्णपूरायतां नः ॥३८॥ चेतो जातप्रमोदं सपदि विदधती प्राणिनां वाणिनीनां पाणिद्वन्द्वाग्रजाग्रत्सुललितरणितस्वर्णतालानुकूला । स्वीयारावेण पाथोधररवपटुना नादयन्ती मयूरी मायूरीं मन्दभावं मणिमुरजभवा मार्जना मार्जयेन्नः ॥ ३९ ॥ देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्यः । श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये सन्ति तेभ्यः सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥ ४० ॥ ध्यायन्नित्यं प्रभाते प्रतिदिवसमिदं स्तोत्ररत्नं पठेद्यः किंवा ब्रूमस्तदीयं सुचरितमथवा कीर्तयामः समासात् । सम्पज्जातं समग्रं सदसि बहुमतिं सर्वलोकप्रियत्वं सम्प्राप्यायुःशतान्ते पदमयति परब्रह्मणो मन्मथारेः ॥ ४१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकराचार्यस्य कृतौ शिवपादादिकेशान्तवर्णनस्तोत्रं संपूर्णम् ॥

## १०५. अर्धनारीनटेश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चांपेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय । धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥ १ ॥ कस्तूरिकाकुंकुमचर्चितायै चितारजःपुंजविचर्चिताय । कृत-

स्मरायै विकृतस्मराय नमः शिवायै च नमः शिवाय ॥ २ ॥ चलत्कणत्कंकणनूपुरायै पादाब्जराजत्फणिनूपुराय । हेमांगदायै भुजगांगदाय नमः शिवायै च नमः शिवाय ॥ ३ ॥ विशालनीलोत्पललोचनायै विकासिपंकेरुहलोचनाय । समेक्षणायै विषमेक्षणाय नमः शिवायै च नमः शिवाय ॥ ४ ॥ मंदारमालाकलितालकायै कपालमालांकितकंधराय । दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय ॥ ५ ॥ अंभोधरश्यामलकुंतलायै तडित्प्रभाताम्रजटाधराय । निरीश्वरायै निखिलेश्वराय नमः शिवायै च नमः शिवाय ॥ ६ ॥ प्रपंचसृष्ट्युन्मुखलास्यकायै समस्तसंहारकतांडवाय । जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥ ७ ॥ प्रदीप्तरत्नोज्ज्वलकुंडलायै स्फुरन्महापन्नगभूषणाय । शिवान्वितायै च शिवान्विताय नमः शिवायै च नमः शिवाय ॥ ८ ॥ एतत्पठेदष्टकमिष्टदं यो भक्त्या स मान्यो भुवि दीर्घजीवी । प्राप्नोति सौभाग्यमनंतकालं भूयात्सदा तस्य समस्तसिद्धिः ॥ ९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्प्रणीतमर्धनारीनटेश्वरस्तोत्रं संपूर्णम् ॥

## १०६. शिवकेशादिपादान्तवर्णनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देयासुर्मूर्ध्नि राजत्सरससुरसरित्पारपर्यन्तनिर्यत्प्रांशुस्तम्बाः पिशङ्गास्तुलितपरिणतारक्तशालीलता वः । दुर्वारापत्तिगर्तश्रितनिखिलजनोत्तारणे रज्जुभूता घोराघोर्वीरुहालीदहनशिखिशिखाः शर्म शार्वाः कपर्दाः ॥ १ ॥ कुर्वन्निर्वाणमार्गप्रगमपरिलसद्रूप्यसोपानशङ्कां शक्रारीणां पुराणां त्रयविजयकृतस्पष्टरेखायमाणम् । अव्यादव्याजमुच्चैरलिकहिमधराधित्यकान्तस्त्रिधोद्यज्जाह्नव्याभं मृडानीकमितरुडुपरुक्पाण्डरं वस्त्रिपुण्ड्रम् ॥ २ ॥ कुप्यद्गौरी-

प्रसादानतिसमयपदाङ्गुष्ठसंक्रान्तलाक्षाबिन्दुस्पर्धि स्मरारेः स्फटिकमणिदृषन्मग्नमाणिक्यशोभम् । मूर्ध्न्युद्यद्दिव्यसिन्धोः पतितशफरिकाकारि वो मस्तकं स्तादस्तोकापत्तिकृत्यै हुतवहकणिकामोक्षरूक्षं सदाक्षि ॥ ३ ॥ भूत्यै दृग्भूतयोः स्याद्यदहिमहिमरुग्बिम्बयोः स्निग्धवर्णो दैत्यौघध्वंसशंसी स्फुट इव परिवेषावशेषो विभाति । सर्गस्थित्यन्तवृत्तिर्मयि समुपगतेऽतीव निर्वृत्तगर्वं शर्वाणीभर्तुरुच्चैर्युगलमथ दधद्विभ्रमं तद्भ्रुवोर्वः ॥ ४ ॥ युग्मे रुक्माब्जपिङ्गे ग्रह इव पिहिते द्राग्ययोः प्राग्दुहित्रा शैलस्य ध्वान्तनीलाम्बररचितबृहत्कञ्चुकोऽभूत्प्रपञ्चः । ते त्रैनेत्रे पवित्रे त्रिदशवरघटामित्रजैत्रोग्रशस्त्रे नेत्रे नेत्रे भवेतां द्रुतमिह भवतामिन्द्रियाश्वान्नियन्तुम् ॥ ५ ॥ चण्डीवक्त्रार्पणेच्छोस्तदनु भगवतः पाण्डुरुक्पाण्डुगण्डप्रोद्यत्कण्डूं विनेतुं वितनुत इव ये रत्नकोणैर्विघृष्टिम् । चण्डार्चिर्मण्डलाभे सततनतजनध्वान्तखण्डातिशौण्डे चाण्डीशे ते श्रिये स्तामधिकमवनताखण्डले कुण्डले वः ॥ ६ ॥ खट्वाङ्गोदग्रपाणेः स्फुटविकटपुटो वक्त्ररन्ध्रप्रवेशप्रेप्सूदञ्चत्फणोरुश्वसदतिधवलाहीन्द्रशङ्कां दधानः । युष्माकं कम्रवक्त्राम्बुरुहपरिलसत्कर्णिकाकारशोभः शश्वत्त्राणाय भूयादलमतिविमलोत्तुङ्गकोणः स घोणः ॥ ७ ॥ क्रुध्यत्यद्धा ययोः स्वां तनुमतिलसतोर्बिम्बितां लक्षयन्ती भर्त्रे स्पर्धातिविघ्ना मुहुरितरवधूशङ्कया शैलकन्या । युष्मांस्तौ शश्वदुच्चैरबहुलदशमीशर्वरीशातिशुभ्रावव्यास्तां दिव्यसिन्धोः कमितुरवनमल्लोकपालौ कपोलौ ॥ ८ ॥ यो भासा भात्युपान्तस्थित इव निभृतं कौस्तुभो द्रष्टुमिच्छन् सोत्थस्नेहाद्धितान्तं गलगतगरलं पत्युरुच्चैः पशूनाम् । प्रोद्यत्प्रेम्णा यमार्द्रा पिबति गिरिसुता संपदः सातिरेका लोकाः शोणीकृतान्ता यदधरमहसा सोऽधरो वो विधत्ताम् ॥ ९ ॥ अत्यर्थं

राजते या वदनशशधरादुद्गलच्चारुवाणीपीयूषाम्भःप्रवाहप्रसरपरिल-
सत्फेनबिन्द्वावलीव । देयात्सा दन्तपङ्क्तिश्चिरमिह दनुदायाददौवा-
रिकस्य द्युत्या दीप्तेन्दुकुन्दच्छविरमलतरप्रोन्नताग्रा मुदं वः ॥ १० ॥
न्यक्कुर्वन्नुर्वराभृन्निभघनसमयोद्घुष्टमेघौघघोषं स्फूर्जद्वाध्र्युत्थितोरुध्व-
नितमपि परब्रह्मभूतो गभीरः । सुव्यक्तो व्यक्तमूर्तेः प्रकटितकरणः
प्राणनाथस्य सत्याः प्रीत्या वः संविदध्यात्फलविकलमलं जन्म नादः
स नादः ॥ ११ ॥ भासा यस्य त्रिलोकी लसति परिलसत्फेनबिन्द्वर्ण-
वान्तर्व्यामप्रेवातिगौरस्तुलितसुरसरिद्वारिपूरप्रसारः । पीनात्मा
दन्तभाभिर्भृशमहहहहकारातिभीमः सदेष्टां पुष्टां तुष्टिं कृषीष्ट स्फुट-
मिह भवतामट्टहासोऽष्टमूर्तेः ॥ १२ ॥ सद्योजाताख्यमाप्यं यदुविमल-
मुदग्वर्ति यद्वामदेवं नाम्ना हेम्ना सदक्षं जलदनिभमघोराह्वयं
दक्षिणं यत् । यद्वालार्कप्रभं तत्पुरुषनिगदितं पूर्वमीशानसंज्ञं
यद्दिव्यं तानि शम्भोर्भवदभिलषितं पञ्च दद्युर्मुखानि ॥ १३ ॥ आत्म-
प्रेम्णो भवान्या स्वयमिव रचिताः सादरं सांवनन्या मष्या तिस्रः
सुनीकाञ्जननिभगररेखाः समाभान्ति यस्याम् । आकल्पान-
ल्पभासा भृशरुचिरतरा कम्बुकल्पाऽम्बिकायाः पत्युः सात्यन्त-
मन्तर्विलसतु सततं मन्थरा कन्धरा वः ॥ १४ ॥ वक्त्रेन्दोर्दन्त-
लक्ष्म्याश्चिरमधरमहाकौस्तुभस्याप्युपान्ते सोत्थानां प्रार्थयन् वः
स्थितिमचलभुवे वारयन्त्यै निवेशम् । प्रायुङ्क्तेवाशिषो यः प्रतिपद-
मसृतत्वे स्थितः कालशत्रोः कालं कुर्वन् गलं वो हृदयमयमलं
क्षालयेत्कालकूटः ॥ १५ ॥ प्रौढप्रेमाकुलाया दृढतरपरिरम्भेषु पर्वे-
न्दुमुख्याः पार्वत्याश्चारुचामीकरवलयपदैरङ्कितं कान्तिशालि । रङ्ग-
न्नागाङ्गदाढ्यं सततमविहितं कर्म निर्मूलयेत्तद्दोर्मूलं निर्मलं यद्धृदि
दुरितमपास्यार्जितं धूर्जटेर्वः ॥ १६ ॥ कण्ठाश्लेषार्थमाप्ता दिव इव

कमितुः स्वर्गसिन्धोः प्रवाहाः कान्त्यै संसारसिन्धोः स्फटिकमणि-महासंक्रमाकारदीर्घाः । तिर्यग्विष्कम्भभूतास्त्रिभुवनवसतेर्भिन्नदैत्येभदेहा बाहा वस्ते हरस्य द्रुतमिह निवहानंहसां संहरन्तु ॥ १७ ॥ वक्षो दक्षद्विषोऽलं स्मरभरविनमद्दक्षजाक्षीणवक्षोजान्तर्निक्षिप्तशुम्भन्मलयजमिलितोद्भासि भस्मोक्षितं यत् । क्षिप्रं तद्रूक्षचक्षुः श्रुतिगणफणरत्नौघभामीक्ष्णशोभं युष्माकं शश्वदेनः स्फटिकमणिशिलामण्डलाभं क्षिणोतु ॥ १८ ॥ मुक्तामुक्ते विचित्राकुलवलिलहरीजालशालिन्यवाञ्चन्नाभ्यावर्ते विलोलद्भुजगवरयुते कालशत्रोर्विशाले । युष्मच्चित्तत्रिधामा प्रतिनवरुचिरे मन्दिरे कान्तिलक्ष्म्याः शेतां शीतांशुगौरे चिरतरमुदरक्षीरसिन्धौ सलीलम् ॥ १९ ॥ वैयाघ्री यत्र कृत्तिः स्फुरति हिमगिरेर्विस्तृतोपत्यकान्तः सान्द्रावश्यायमिश्रा परित इव वृता नीलजीमूतमाला । आबद्धाहीन्द्रकाञ्चीगुणमतिपृथुलं शैलजाक्रीडभूमिस्तद्वो निःश्रेयसे स्याज्जघनमतिघनं बालशीतांशुमौलेः ॥ २० ॥ पुष्टावष्टम्भभूतौ पृथुतरजघनस्यापि नित्यं त्रिलोक्याः सम्यग्वृत्तौ सुरेन्द्रद्विरदवरकरोदारकान्तिं दधानौ । साराबूरू पुरारेः प्रसभमरिघटाघस्मरौ भस्मशुभ्रौ भक्तैरत्यार्द्रचित्तैरधिकमवनतौ वाञ्छितं वो विधत्ताम् ॥ २१ ॥ आनन्द्रायेन्दुकान्तोपलरचितसमुद्गायिते ये मुनीनां चित्तादर्शं निधातुं विदधति चरणे ताण्डवाकुञ्चनानि । काञ्चीभोगीन्द्रमूर्ध्नां प्रतिमुहुरुपधानायमाने क्षणं ते कान्ते स्तामन्तकारेर्द्युतिविजितसुधाभानुनी जानुनी वः ॥ २२ ॥ मञ्जीरीभूतभोगिप्रवरगणफणामण्डलान्तर्नितान्तव्यादीर्घानर्घरत्नद्युतिकिसलयिते स्तूयमाने द्युसद्भिः । बिभ्रत्यौ विभ्रमं वः स्फटिकमणिबृहद्दण्डवद्भासिते ये जङ्घे शङ्खेन्दुशुभ्रे भृशमिह भवतां मानसे शूलपाणेः ॥ २३ ॥ अस्तोकस्तोमशस्त्रैरपचि-

तिममलां भूरिभावोपहारैः कुर्वद्भिः सर्वदोर्वैः सततमभिवृतौ ब्रह्मविह्वलाद्यैः । सम्यक्सम्पूज्यमानाविह हृदि सरसीवानिशं युष्मदीये शर्वस्य क्रीडतां तौ प्रपदवरबृहत्कच्छपावच्छभासौ ॥ २४ ॥ याः स्वस्यैकांशपातादतिबहलगलद्रक्तवक्त्रं प्रणुन्नप्राणं प्राक्रोशयन्प्राङ्निजमचलवरं चालयन्तं दशास्यम् । पादाङ्गुल्यो दिशन्तु द्रुतमयुगदृशः कल्मषप्लोषकल्याः कल्याणं फुल्लमाल्यप्रकरविलसिता वः प्रणद्धाहिवल्ल्यः ॥ २५ ॥ ब्रह्मप्राचीनबर्हिःप्रमुखसुरवरप्रस्फुरन्मौलिसक्तज्यायोरत्नोत्करोत्थैरविरतममला भूरिनीराजिता या । प्रोद्यत्प्राप्रादेशात्ततिरिव रुचिरा तारकाणां नितान्तं नीलग्रीवस्य पादाम्बुरुहविलसिता सा नखाली: सुखं वः ॥ २६ ॥ सत्याः सत्याननेन्द्रावपि सविधगते ये विकासं दधाते स्वान्ते स्वां ते लभन्ते श्रियमिह सरसीवामरा ये दधानाः । लोलं लोलम्बकानां कुलमिव सुधियां सेवते ये सदा त्वां भूत्यै भूत्यैणपाणेर्विमलतररुचस्ते पदाम्भोरुहे वः ॥ २७ ॥ येषां रागादिदोषाक्षतमति यतयो यान्ति मुक्तिप्रसादाद्ये वा नम्रात्ममूर्तिद्युसदृशिपरिषन्मूर्ध्नि शेषायमाणाः । श्रीकण्ठस्यारुणोद्यच्चरणसरसिजप्रोत्थितास्ते भवाख्यात्पारावाराच्चिरं वो दुरितहतिकृतस्तारयेयुः परागाः ॥ २८ ॥ भूम्ना यस्यास्तसीम्ना भुवनमनुसृतं यत्परं धाम धाम्नां साम्नामाम्नायतत्त्वं यदपि च परमं यद्गुणातीतमाद्यम् । यच्चांहोहन्निरीहं गगनमिति मुहुः प्राहुरुच्चैर्महान्तो माहेशं तन्महो मे महितमहरहर्मोहरोहं निहन्तु ॥२९॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पादशिष्यस्य श्रीमच्छंकराचार्यस्य कृतौ शिवकेशादिपादान्तवर्णनस्तोत्रं संपूर्णम् ॥

## १०७. अपराधभंजनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शांतं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं शूलं वज्रं च खड्गं परशुमपि वरं दक्षिणाङ्गे वहंतम् । नागं पाशं च

घण्टां डमरुकसहितं चांकुशं वामभागे नानालंकारदीप्तं स्फटिकमणिनिभं पार्वतीशं भजामि ॥ १ ॥ वंदे देवमुमापतिं सुरगुरुं वंदे जगत्कारणं वंदे पन्नगभूषणं मृगधरं वंदे पशूनां पतिम् । वंदे सूर्यशशांकवह्निनयनं वंदे मुकुंदप्रियं वंदे भक्तजनाश्रयं च वरदं वंदे शिवं शंकरम् ॥ २ ॥ आदौ कर्मप्रसंगात्कलयति कलुषं मातृकुक्षौ स्थितः सन् विण्मूत्रामेध्यमध्ये व्यथयति नितरां जाठरो जातवेदाः । यद्यद्वा सांब दुःखं विषयति विषमं शक्यते केन वक्तुं क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ३ ॥ बाल्ये दुःखातिरेको मललुलितवपुः स्तन्यपाने पिपासा नो शक्यं चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति । नानारोगोत्थदुःखादुदरपरिवशः शंकरं न स्मरामि क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ४ ॥ प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ दृष्टो नष्टो विवेकः सुतधनयुवतिस्वादुसौख्ये निषण्णाः । शैवे चिन्ताविहीनं मम हृदयमहो मानगर्वाधिरूढं क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ५ ॥ वार्धक्ये चेन्द्रियाणां विगतगतनतैराधिदैवादितापैः पापै रोगैर्वियोगैरसहशवपुषं प्रौढहीनं च दीनम् । मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ६ ॥ नो शक्यं स्मार्तकर्म प्रतिपदगहनप्रत्यवायाकुलाख्यं श्रौतं वार्ता कथं मे द्विजकुलविहिते ब्रह्ममार्गे च सारे । नष्टो धर्म्यो विचारः श्रवणमननयोः को निदिध्यासितव्यः क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ७ ॥ स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गाङ्गतोयं पूजार्थं वा कदाचिद्बहुतरगहनात् खण्डबिल्वै-

कपत्रम् । नानीता पद्ममाला सरसि विकसिता गन्धपुष्पे त्वदर्थं क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ८ ॥ दुग्धैर्मध्वाज्ययुक्तैर्घटशतसहितैः स्नापितं नैव लिङ्गं नो लिप्तं चंदनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः । धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ९ ॥ नग्नो निःसङ्गशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो नासाग्रे न्यस्तदृष्टिर्विहरभवगुणैर्नैव दृष्टः कदाचित् । उन्मत्तावस्थया त्वां विगतकलिमलं शंकरं न स्मरामि क्षंतव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ १० ॥ ध्यानं चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो हव्यं ते लक्षसंख्यं हुतवहवदने नार्पितं बीजमंत्रैः । नो जप्तं गांगतीरे व्रतपरिचरणै रुद्रजप्यैर्न वेदैः क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ ११ ॥ स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुंभके सूक्ष्ममार्गे शांते स्वांते प्रलीने प्रकटितगहने ज्योतिरूपे पराख्ये । लिंगं तद्ब्रह्मवाच्यं सकलमभिमतं नैव दृष्टं कदाचित्क्षंतव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥ १२ ॥ आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं प्रत्यायांति गताः पुनर्न दिवसाः कालो जगद्भक्षकः । लक्ष्मीस्तोयतरंगभंगचपला विद्युच्चलं जीवनं तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥ १३ ॥ चंद्रोद्भासितशेखरे स्मरहरे गंगाधरे शंकरे सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे । दंतित्वक्कृतसुंदरांबरधरे त्रैलोक्यसारे हरे मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्मभिः ॥ १४ ॥ किं दानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् । ज्ञात्वैतत्क्षणभंगुरं सपदि

रे त्याज्यं मनो दूरतः स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥ १५ ॥ करचरणकृतं वा कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् । विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शंभो ॥ १६ ॥ गात्रं भस्मसितं स्मितं च हसितं हस्ते कपालं सितं खट्वांगं च सितं सितश्च वृषभः कर्णे सिते कुण्डले । गंगाफेनसितं जटावलयकं चंद्रः सितो मूर्धनि सोऽयं सर्वसितो ददातु विभवं पापक्षयं शंकरः ॥ १७ ॥ इत्यपराधभंजनस्तोत्रं समाप्तम् ॥

## १०८. निर्वाणषट्कम् ।

श्रीगणेशाय नमः ॥ मनोबुद्ध्यहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे । न च व्योम भूमिर्न तेजो न वायुश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥ न च प्राणसंज्ञो न वै पंचवायुर्न वा सप्तधातुर्न वा पंचकोशः । न वाक्पाणिपादं न चोपस्थपायू चिदानंद० ॥ २ ॥ न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः । न धर्मो न चार्थो न कामो न मोक्षश्चिदा० ॥ ३ ॥ न पुण्यं न पापं न सौख्यं न दुःखं न मंत्रो न तीर्थं न वेदा न यज्ञाः । अहं भोजनं नैव भोज्यं न भोक्ता चिदा० ॥ ४ ॥ न मृत्युर्न शंका न मे जातिभेदः पिता नैव मे नैव माता च जन्म । न बंधुर्न मित्रं गुरुर्नैव शिष्यश्चिदा० ॥ ५ ॥ अहं निर्विकल्पी निराकाररूपी विभुत्वाच्च सर्वत्र सर्वेंद्रियाणाम् । न चासंगतं नैव मुक्तिर्न मेयश्चिदा० ॥ ६ ॥ इति श्रीमच्छंकराचार्यविरचितं निर्वाणषट्कं संपूर्णम् ॥

## १०९. भक्तशरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ आर्द्रांतःकरणस्त्वं यस्मादीशान भक्तवृंदेषु । आर्द्रोत्सवप्रियोऽतः श्रीकंठान्नास्ति नैव संदेहः ॥ १ ॥ दृष्ट्वा त्वयोत्सवस्य हि लोकान्पापात्तथा मृत्योः । मा भीरस्त्विति शंभो मध्ये तिर्यग्गतागतैर्ब्रूषे ॥ २ ॥ प्रकरोति करुणयार्द्रान् शंभुर्नम्रानिति प्रबोधाय । धर्मोऽयं किल लोकानार्द्रान्कुरुतेऽद्य गौरीश ॥ ३ ॥ आर्द्रां नटेशस्य मनोऽब्जवृत्तिरित्यर्थसंबोधकृते जनानाम् । आर्द्रर्क्षे एवोत्सवमाह शस्तं पुराणजालं तव पार्वतीश ॥ ४ ॥ बाणार्चने भगवतः परमेश्वरस्य प्रीतिर्भवेन्निरुपमेति यतः पुराणैः । संबोध्यते परशिवस्य ततः करोति बाणार्चनं जगति भक्तियुता जनालिः ॥ ५ ॥ यथांधकं त्वं विनिहत्य शीघ्रं लोकस्य रक्षामकरोः कृपाब्धे । तथाज्ञतां मे विनिवार्य शीघ्रं विद्यां प्रयच्छाशु सभाधिनाथ ॥ ६ ॥ इति भक्तशरणस्तोत्रं संपूर्णम् ॥

## ११०. श्रीकालांतकाष्टकम् ।

श्रीगणेशाय नमः ॥ कमलापतिमुखसुरवरपूजित काकोलभासितग्रीव । काकोदरपतिभूषण कालांतक पाहि पार्वतीनाथ ॥ १ ॥ कमलाभिमानवारणदक्षांघ्रे विमलशेमुषीदायिन् । नतकामितफलदायक कालांतक पाहि पार्वतीनाथ ॥ २ ॥ करुणासागर शंभो शरणागतलोकरक्षणधुरीण । कारण समस्तजगतां कालांतक पाहि पार्वतीनाथ ॥ ३ ॥ प्रणतार्तिहरणदक्ष प्रणवप्रतिपाद्य पर्वतावास । प्रणमामि तव पदाब्जे कालांतक पाहि पार्वतीनाथ ॥ ४ ॥ मंदार नतजनानां वृंदारकवृंदगेयसुचरित्र । मुनिपुत्रमृत्युहारिन् कालांतक पाहि पार्वतीनाथ ॥ ५ ॥ मारारण्यदवानल मायावारींद्रकुंभसंजात । मातंगचर्मवासः कालांतक पाहि पार्वतीनाथ ॥ ६ ॥ मोहांधकार-

मानो मोदितगिरिजामनःसरोजात । मोक्षप्रद प्रणमतां कालांतक पाहि पार्वतीनाथ ॥ ७ ॥ विद्यानायक मह्यं विद्यां दत्त्वा निवार्य चाविद्याम् । विद्याधरादिसेवित कालांतक पाहि पार्वतीनाथ ॥ ८ ॥ कालांतकाष्टकमिदं पठति जनो यः कृतादरो लोके । कालांतकप्रसादात्कालकृता भीर्न संभवेत्तस्य ॥ ९ ॥ इति कालांतकाष्टकं संपूर्णम् ॥

## १११. शंभुस्तवः ।

श्रीगणेशाय नमः ॥ कैलासशैलनिलयात्कलिकल्मषघ्नाच्चंद्रार्धभूषितजटाद्वटमूलवासात् । नम्रोत्तमांगविनिवेशितहस्तपद्माच्छंभोः परं किमपि दैवमहं न जाने ॥ १ ॥ नाकाधिनायककरपल्लवसेवितांघ्रेर्नागास्यषण्मुखविभासितपार्श्वभागात् । निर्व्याजपूर्णकरुणाद्विखिलामरेड्याच्छंभोः परं किमपि दैवमहं न जाने ॥ २ ॥ मौनींद्ररक्षणकृते जितकालगर्वात्पापाब्धिशोषणविधौ जितवाडवाग्नेः । मारांगभस्मपरिलेपनशुक्लगात्राच्छंभोः परं किमपि देवमहं न जाने ॥ ३ ॥ विज्ञानमुद्रितकराच्छरदिंदुशुभ्राद्विज्ञानदाननिरताज्जडपङ्क्तयेऽपि । वेदांतगेयचरणाद्विधिविष्णुसेव्याच्छंभोः परं किमपि दैवमहं न जाने ॥ ४ ॥ इति शंभुस्तवः संपूर्णः ॥

## ११२. परमात्माष्टकम् ।

श्रीगणेशाय नमः ॥ परमात्मंस्तव प्राप्तौ कुशलोऽस्मि न संशयः । तथापि मे मनो दुष्टं भोगेषु रमते सदा ॥ १ ॥ यदा यदा तु वैराग्यं भोगेभ्यश्च करोम्यहम् । तदैव मे मनो मूढं पुनर्भोगेषु गच्छति ॥ २ ॥ भोगान्भुक्त्वा मुदं याति मनो मे चञ्चलं प्रभो । तव स्मृतिर्यदायाति तदा याति बहिर्मुखम् ॥ ३ ॥ प्रत्यहं शास्त्रनिचयं चिन्तयामि समाहितः । तथापि मे मनो मूढं त्यक्त्वा त्वां भोगमिच्छति ॥४॥ शोक-

मोहौ मानमदौ तवाज्ञानाद्भवन्ति वै । यदा बुद्धिपथं यासि यान्ति ते विलयं तदा ॥ ५ ॥ कृपा कुरु तथा नाथ त्वयि चित्तं स्थिरं यथा । मम स्याज्ज्ञानसंयुक्तं तव ध्यानपरायणम् ॥ ६ ॥ मायया ते विमूढोऽस्मि न पश्यामि हिताहितम् । संसारापारपाथोधौ पतितं मां समुद्धर ॥ ७ ॥ परमात्मंस्त्वयि सदा मम स्यान्निश्चला मतिः । संसारदुःखगहनात्त्वं सदा रक्षको मम ॥ ८ ॥ परात्मन इदं स्तोत्रं मोहविच्छेदकारकम् । ज्ञानदं च भवेन्नृणां योगानन्देन निर्मितम् ॥ ९ ॥ इति श्रीयोगानन्दतीर्थविरचितं परमात्माष्टकं संपूर्णम् ॥

## ११३. शिवजयवादस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जय जय गिरिजालंकृतविग्रह, जय जय विनताखिलदिक्पाल । जय जय सर्वविपत्तिविनाशन, जय जय शंकर दीनदयाल ॥ १ ॥ जय जय सकलसुरासुरसेवित, जय जय वांछितदानवितंद्र । जय जय लोकालोकधुरंधर जय जय नागेश्वर धृतचंद्र ॥ २ ॥ जय जय हिमाचलनिवासिन्, जय जय करुणाकल्पितलिंग । जय जय संसृतिरचनाशिल्पिन्, जय जय भक्तहृदंबुजभृंग ॥ ३ ॥ जय जय भोगिफणामणिरंजित, जय जय भूतिविभूषितदेह । जय जय पितृवनकेलिपरायण, जय जय गौरीविभ्रमगेह ॥ ४ ॥ जय जय गांगतरंगलुलितजट, जय जय मंगलपूरसमुद्र । जय जय बोधविजृंभणकारण, जय जय मानसपूर्तिविनिद्र ॥ ५ ॥ जय जय दयातरंगितलोचन, जय जय चित्रचरित्रपवित्र । जय जय शब्दब्रह्मविकाशक, जय जय किल्बिषतापधवित्र ॥ ६ ॥ जय जय तंत्रनिरूपणतत्पर, जय जय योगविकस्वरधाम । जय जय मदनमहाभटभंजन, जय जय पूरितपूजककाम ॥ ७ ॥ जय जय गंगाधर विश्वेश्वर, जय जय पतितपवित्रविधान । जय जय बंबंनाद

कृपाकर, जय जय शिव शिव सौख्यनिधान ॥ ८ ॥ य इमं शिवजयवादमुदारं, पठति सदा शिवधाम्नि । तस्य सदाशिवशासनयोगान्माद्यति संपदजस्रि ॥ ९ ॥ इति शिवजयवादस्तोत्रं संपूर्णम् ॥

## ११४. कालभैरवाष्टकम् ।

श्रीगणेशाय नमः॥ देवराजसेव्यमानपावनांघ्रिपंकजं व्यालयज्ञसूत्रमिंदुशेखरं कृपाकरम् । नारदादियोगिवृंदवंदितं दिगंबरं काशिकापुराधिनाथकालभैरवं भजे ॥ १ ॥ भानुकोटिभास्वरं भवाब्धितारकं परं नीलकंठमीप्सितार्थदायकं त्रिलोचनम् । कालकालमंबुजाक्षमक्षशूलमक्षरं काशिका० ॥ २ ॥ शूलटंकपाशदंडपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम् । भीमविक्रमं प्रभुं विचित्रतांडवप्रियं काशिका० ॥ ३ ॥ भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम् । विनिक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं काशिका० ॥ ४ ॥ धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम् । स्वर्णवर्णशेषपाशशोभितांगमंडलं काशिका० ॥ ५ ॥ रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरंजनम् । मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिका० ॥ ६ ॥ अट्टहासभिन्नपद्मजांडकोशसंततिं दृष्टिपातनष्टपापजालमुग्रशासनम् । अष्टसिद्धिदायकं कपालमालिकंधरं काशिका० ॥ ७ ॥ भूतसंघनायकं विशालकीर्तिदायकं काशिवासलोकपुण्यपापशोधकं विभुम् । नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिका० ॥ ८ ॥ कालभैरवाष्टकं पठंति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् । शोकमोहदैन्यलोभकोपतापनाशनं प्रयांति कालभैरवांघ्रिसंनिधिं नरा ध्रुवम् ॥ ९ ॥ इति श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकं संपूर्णम् ॥

## ११५. शिवभुजंगप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यदा दारुणाभाषणा भीषणा मे भविष्यंत्युपांते कृतांतस्य दूताः । तदा मन्मनस्त्वत्पदांभोरुहस्थं कथं निश्चलं स्यान्नमस्तेऽस्तु शंभो ॥ १ ॥ यदा दुर्निवारव्यथोऽहं शयानो लुठन्निःश्वसन्निःसृताव्यक्तवाणिः । तदा जह्नुकन्याजलालंकृतं ते जटामंडलं मन्मनोमंदिरं स्यात् ॥ २ ॥ यदा पुत्रमित्रादयो मत्सकाशे रुदंत्यस्य हा कीदृशीयं दशेति । तदा देवदेवेश गौरीश शंभो नमस्ते शिवायेत्यजस्रं भवाणि ॥ ३ ॥ यदा पश्यतां मामसौ वेत्ति नास्मानयं श्वास एवेति वाचो वदेयुः । तदा भूतिभूषं भुजंगावनद्धं पुरारे भवंतं स्फुटं भावयेयम् ॥ ४ ॥ यदा पारमच्छायमस्थानमद्भिर्जनैर्वा विहीनं गमिष्यामि दूरम् । तदा तं निरुंधन् कृतांतस्य मार्गं महादेव मह्यं मनोज्ञं प्रयच्छ ॥ ५ ॥ यदा रौरवादीन् स्मरन्नेव भीत्या व्रजाम्येव मोहं पतिष्यामि घोरे । तदा मामहो नाथ कस्तारयिष्यत्यनाथं पराधीनमर्धेन्दुमौले ॥ ६ ॥ यदा श्वेतपत्रायतालङ्घ्यशक्तेः कृतांताद्भयं भक्तवात्सल्यभावात् । तदा पाहि मां पार्वतीवल्लभान्यं न पश्यामि पातारमेतादृशं मे ॥ ७ ॥ इदानीमिदानीं मतिर्मे भवित्रीत्यहो संततं चिंतया पीडितोऽस्मि । कथं नाम मा भून्मनोवृत्तिरेषा नमस्ते गतीनां गते नीलकंठ ॥ ८ ॥ अमर्यादमेवाहमाबालवृद्धं हरंतं कृतांतं समीक्ष्यास्मि भीतः । स्तुतौ तावदस्यां तवैव प्रसादाद्भवानीपते निर्भयोऽहं भवानि ॥ ९ ॥ जराजन्मगर्भाधिवासादिदुःखान्यसह्यानि जह्यां जगन्नाथ केन । भवंतं विना मे गतिर्नैव शंभो दयालो न जागर्ति किं वा दया ते ॥ १० ॥ शिवायेति शब्दो नमःपूर्व एष स्मरन्मुक्तिकृन्मृत्युहा तत्त्ववाची । ममेशान मागान्मनस्तो वचस्तः सदा मह्यमेतत्प्रदानं प्रयच्छ ॥ ११ ॥

त्वमप्यंब मां पश्य शीतांशुमौलिप्रिये भेषजं त्वं भवव्याधिशांत्यै । बृहत्क्लेशभाजं पदांभोजपोते भवाब्धौ निमग्नं नयस्वाद्य पारम् ॥ १२ ॥ अनेन स्तवेनादरादम्बिकेशं परां भक्तिमातन्वता ये नमन्ति । मृतौ निर्भयास्ते जनं तं लभन्ते हृदंभोजमध्ये समासीनमीशम् ॥ १३ ॥ अकण्ठे कलङ्कादनङ्गे भुजङ्गादपाणौ कपालादभालेऽनलाक्षात् । अमौलौ शशाङ्कादहं देवमन्यं न मन्ये न मन्ये न मन्ये न मन्ये ॥ १४ ॥ किरीटे निशीशो ललाटे हुताशो भुजे भोगिराजो गले कालिमा च । तनौ कामिनी यस्य तुल्यं न देवं न जाने न जाने न जाने न जाने ॥ १५ ॥ अयं दानकालस्त्वहं दानपात्रं भवानेव दाता त्वदन्यं न याचे । भवद्भक्तिमेव स्थिरां देहि मह्यं कृपाशील शंभो कृतार्थोऽस्मि यस्मात् ॥ १६ ॥ शिवोऽहं शिवोऽहं शिवोऽहं शिवोऽहं शिवादन्यथा दैवतं नाभिजाने । महादेव शंभो गिरीश त्रिशूलिन् त्वयीदं समस्तं विभातीति यस्मात् ॥ १७ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं शिवभुजङ्गप्रयातस्तोत्रं संपूर्णम् ॥

## ११८. शङ्कराष्टकम् ।

श्रीगणेशाय नमः ॥ हे वामदेव शिवशंकर दीनबन्धो काशीपते पशुपते पशुपाशनाशिन् । हे विश्वनाथ भवबीज जनार्तिहारिन् संसारदुःखगहनाज्जगदीश रक्ष ॥ १ ॥ हे भक्तवत्सल सदाशिव हे महेश हे विश्वतात जगदाश्रय हे पुरारे । गौरीपते मम पते मम प्राणनाथ संसारदुःखगहनाज्जगदीश रक्ष ॥ २ ॥ हे दुःखभञ्जक विभो गिरिजेश शूलिन् हे वेदशास्त्रविनिवेद्य जनैकबन्धो । हे व्योमकेश भुवनेश जगद्विशिष्ट संसारदुःखगहनाज्जगदीश रक्ष ॥ ३ ॥ हे धूर्जटे गिरिश हे गिरिजार्धदेह हे सर्वभूतजनक प्रमथेश

देव । हे सर्वदेवपरिपूजितपादपद्म संसारदुःखगहनाज्जगदीश रक्ष ॥ ४ ॥ हे देवदेव वृषभध्वज नन्दिकेश कालीपते गणपते गजचर्मवासः । हे पार्वतीश परमेश्वर रक्ष शंभो संसारदुःखगहनाद्दहनाच्च शश्वत् ॥ ५ ॥ हे वीरभद्र भववैद्य पिनाकपाणे हे नीलकंठ मदनान्त शिवाकलत्र । वाराणसीपुरपते भवभीतिहारिन् संसारदुःखगहनाज्जगदीश रक्ष ॥ ६ ॥ हे कालकाल मृड शर्व सदासहाय हे भूतनाथ भवबाधक हे त्रिनेत्र । हे यज्ञशासक यमान्तक योगिवन्द्य संसारदुःखगहनाज्जगदीश रक्ष ॥ ७ ॥ हे वेदवेद्य शशिशेखर हे दयालो हे सर्वभूतप्रतिपालक शूलपाणे । हे चन्द्रसूर्य शिखिनेत्र चिदेकरूप संसारदुःखगहनाज्जगदीश रक्ष ॥ ८ ॥ श्रीशंकराष्टकमिदं योगानन्देन निर्मितम् । सायंप्रातः पठेन्नित्यं सर्वपापविनाशकम् ॥ ९ ॥ इति श्रीयोगानन्दतीर्थविरचितं शङ्कराष्टकं संपूर्णम् ॥

## ११७. हिमालयकृतशिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ हिमालय उवाच ॥ त्वं ब्रह्मा सृष्टिकर्ता च त्वं विष्णुः परिपालकः । त्वं शिवः शिवदोऽनंतः सर्वसंहारकारकः ॥ १ ॥ त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः । प्रकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥ २ ॥ नानारूपविधाता त्वं भक्तानां ध्यानहेतवे । येषु रूपेषु यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥ ३ ॥ सूर्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम् । सोमस्त्वं सस्यपाता च सततं शीतरश्मिना ॥ ४ ॥ वायुस्त्वं वरुणस्त्वं च विद्वांश्च विदुषां गुरुः । मृत्युंजयो मृत्युमृत्युः कालकालो यमांतकः ॥ ५ ॥ वेदस्त्वं वेदकर्ता च वेदवेदांगपारगः । विदुषां जनकस्त्वं च विद्वांश्च विदुषां गुरुः ॥ ६ ॥ मंत्रस्त्वं हि जपस्त्वं हि

तपस्त्वं तत्फलप्रदः । वाक् त्वं रागाधिदेवी त्वं तत्कर्ता तद्गुरुः स्वयम् ॥ ७ ॥ अहो सरस्वतीबीज कस्त्वां स्तोतुमिहेश्वरः । इत्येवमुक्त्वा शैलेंद्रस्तस्थौ धृत्वा पदांबुजम् ॥ ८ ॥ तत्रोवास तमाबोध्य चावरुह्य वृषाच्छिवः । स्तोत्रमेतन्महापुण्यं त्रिसंध्यं यः पठेन्नरः ॥ ९ ॥ मुच्यते सर्वपापेभ्यो भयेभ्यश्च भवार्णवे । अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ॥ १० ॥ भार्याहीनो लभेद्भार्यां सुशीलां सुमनोहराम् । चिरकालगतं वस्तु लभते सहसा ध्रुवम् ॥ ११ ॥ राज्यभ्रष्टो लभेद्राज्यं शंकरस्य प्रसादतः । कारागारे श्मशाने च शत्रुग्रस्तेऽतिसंकटे ॥ १२ ॥ गभीरेऽतिजलाकीर्णे भग्नपोते विषादने । रणमध्ये महाभीते हिंस्रजंतुसमन्विते ॥ १३ ॥ यः पठेच्छ्रद्धया सम्यक् स्तोत्रमेतज्जगद्गुरोः । सर्वतो मुच्यते स्तुत्वा शंकरस्य प्रसादतः ॥ १४ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे हिमालयकृतं शिवस्तोत्रं संपूर्णम् ॥

## ११८. शिवाष्टकम् ।

श्रीगणेशाय नमः ॥ प्रभुं प्राणनाथं विभुं विश्वनाथं जगन्नाथनाथं सदानंदभाजाम् । भवद्भव्यभूतेश्वरं भूतनाथं शिवं शंकरं शंभुमीशानमीडे ॥ १ ॥ गले रुंडमालं तनौ सर्पजालं महाकालकालं गणेशाधिपालम् । जटाजूटभंगोत्तरंगैर्विशालं शिवं० ॥ २ ॥ मुदामाकरं मंडनं मंडयंतं महामंडलं भस्मभूषाधरं तम् । अनादिं ह्यपारं महामोहमारं शिवं० ॥ ३ ॥ तटाधोनिवासं महाट्टाट्टहासं महापापनाशं सदा सुप्रकाशम् । गिरीशं गणेशं सुरेशं महेशं शिवं० ॥ ४ ॥ गिरींद्रात्मजासंगृहीतार्धदेहं गिरौ संस्थितं सर्वदासन्नगेहम् । परब्रह्म ब्रह्मादिभिर्वंद्यमानं शिवं० ॥ ५ ॥ कपालं त्रिशूलं कराभ्यां दधानं पदांभोजनम्राय कामं ददानम् । बलीवर्द-

यानं सुराणां प्रधानं शिवं० ॥ ६ ॥ शरच्चंद्रगात्रं गुणानंदपात्रं त्रिनेत्रं पवित्रं धनेशस्य मित्रम् । अपर्णाकलत्रं चरित्रं विचित्रं शिवं० ॥ ७ ॥ हरं सर्पहारं चिताभूविहारं भवं वेदसारं सदा निर्विकारम् । श्मशाने वसंतं मनोजं दहंतं शिवं० ॥ ८ ॥ स्तवं यः प्रभाते नरः शूलपाणेः पठेत्सर्वदा भर्गभावानुरक्तः । स पुत्रं धनं धान्यमित्रं कलत्रं विचित्रः समासाद्य मोक्षं प्रयाति ॥ ९ ॥ इति श्रीशिवाष्टकं संपूर्णम् ॥

## ११९. द्वादशज्योतिर्लिंगस्मरणम् ।

श्रीगणेशाय नमः ॥ सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् । उज्जयिन्यां महाकालमोंकारममलेश्वरम् ॥ १ ॥ परल्यां वैजनाथं च डाकिन्यां भीमशंकरम् । सेतुबंधे तु रामेशं नागेशं दारुकावने ॥ २ ॥ वाराणस्यां तु विश्वेशं त्र्यंबकं गौतमीतटे । हिमालये तु केदारं घुसृणेशं शिवालये ॥ ३ ॥ एतानि ज्योतिर्लिंगानि सायं प्रातः पठेन्नरः । सप्तजन्मकृतं पापं स्मरणेन विनश्यति ॥ ४ ॥ इति द्वादशज्योतिर्लिंगस्मरणं संपूर्णम् ॥

## १२०. दारिद्र्यदहनशिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखरधारणाय । कर्पूरकांतिधवलाय जटाधराय दारिद्र्यदुःखदहनाय नमः शिवाय ॥ १ ॥ गौरीप्रियाय रजनीशकलाधराय कालांतकाय भुजगाधिपकंकणाय । गंगाधराय गजराजविमर्दनाय दारिद्र्य० ॥ २ ॥ भक्तिप्रियाय भवरोगभयापहाय उग्राय दुर्गभवसागरतारणाय । ज्योतिर्मयाय गुणनामसुनृत्यकाय दारिद्र्य० ॥ ३ ॥ चर्मांबराय शवभस्मविलेपनाय भालेक्षणाय मणिकुंडलमंडिताय । मंजीरपादयुगलाय जटाधराय दारिद्र्य० ॥ ४ ॥ पंचाननाय फणिराज-

विभूषणाय हेमांशुकाय भुवनत्रयमंडिताय । आनंदभूमिवरदाय तमोमयाय दारिद्र्य० ॥ ५ ॥ भानुप्रियाय भवसागरतारणाय कालांतकाय कमलासनपूजिताय । नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्य० ॥६॥ रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नरकार्णवतारणाय । पुण्येषु पुण्यभरिताय सुरार्चिताय दारिद्र्य० ॥ ७ ॥ मुक्तेश्वराय फलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय । मातंगचर्मवसनाय महेश्वराय दारिद्र्य० ॥ ८ ॥ वसिष्ठेन कृतं स्तोत्रं सर्वरोगनिवारणम् । सर्वसंपत्करं शीघ्रं पुत्रपौत्रादिवर्धनम् । त्रिसंध्यं यः पठेन्नित्यं स हि स्वर्गमवाप्नुयात् ॥ ९ ॥ इति श्रीवसिष्ठविरचितं दारिद्र्यदहनशिवस्तोत्रं संपूर्णम् ॥

## १२१. ईश्वरप्रार्थनास्तोत्रम् ।

श्रीगणेशाय नमः ॥ ईश्वरं शरणं यामि क्रोधमोहादिपीडितः । अनाथं पतितं दीनं पाहि मां परमेश्वर ॥ १ ॥ प्रभुस्त्वं जगतां स्वामिन् वश्यं सर्वं तवास्ति च । अहमज्ञो विमूढोऽस्मि त्वां न जानामि हे प्रभो ॥ २ ॥ ब्रह्मा त्वं च तथा विष्णुस्त्वमेव च महेश्वरः । तव तत्त्वं न जानामि पाहि मां परमेश्वर ॥ ३ ॥ त्वं पिता त्वं च मे माता त्वं बन्धुः करुणानिधे । त्वां विना नहि चान्योऽस्ति मम दुःखविनाशकः ॥ ४ ॥ अन्तकाले त्वमेवासि मम दुःखविनाशकः । तस्माद्धि शरणोऽहं ते रक्ष मां हे जगत्पते ॥ ५ ॥ पितापुत्रादयः सर्वे संसारे सुखभागिनः । विपत्तौ परिजातायां कोऽपि वार्तां न पृच्छति ॥ ६ ॥ कामक्रोधादिभिर्युक्तो लोभमोहादिकैरपि । तान्विनश्यात्मनो वैरीन् पाहि मां परमेश्वर ॥ ७ ॥ अनेके रक्षिताः पूर्वं भवता दुःखपीडिताः । क्व गता ते दया चाद्य पाहि मां हे जगत्पते ॥ ८ ॥ न त्वां विना कश्चिदस्ति संसारे मम

रक्षकः । शरणं त्वा प्रपन्नोऽहं त्राहि मां परमेश्वर ॥ ९ ॥ ईश्वरप्रार्थनास्तोत्रं योगानन्देन निर्मितम् । यः पठेद्भक्तिसंयुक्तः तस्येशः संप्रसीदति ॥ १० ॥ इति श्रीयोगानन्दतीर्थविरचितं ईश्वरप्रार्थनास्तोत्रं संपूर्णम् ॥

## १२२. कल्किकृतशिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ गौरीनाथं विश्वनाथं शरण्यं भूतावासं वासुकीकंठभूषम् । त्र्यक्षं पंचास्यादिदेवं पुराणं वंदे सांद्रानंदसंदोहदक्षम् ॥ १ ॥ योगाधीशं कामनाशं करालं गंगासंगक्लिन्नमूर्धानमीशम् । जटाजूटाटोपरिक्षिप्तभावं महाकालं चंद्रभालं नमामि ॥ २ ॥ श्मशानस्थं भूतवेतालसंगं नानाशस्त्रैः खड्गशूलादिभिश्च । व्यग्रास्युग्रा बाहवो लोकनाशे यस्य क्रोधोद्भूतलोकोऽस्तमेति ॥ ३ ॥ यो भूतादिः पंचभूतैः सिसृक्षुस्तन्मात्रात्मा कालकर्मस्वभावैः । प्रहृत्येदं प्राप्य जीवत्वमीशो ब्रह्मानंदे क्रीडते तं नमामि ॥ ४ ॥ स्थितो विष्णुः सर्वजिष्णुः सुरात्मा लोकान्साधून्धर्मसेतून्बिभर्ति । ब्रह्माद्यंशे योऽभिमानी गुणात्मा शब्दाद्यंगैस्तं परेशं नमामि ॥ ५ ॥ यस्याज्ञया वायवो वान्ति लोके ज्वलत्यग्निः सविता याति तप्यन् । शीतांशुः खे तारकासंग्रहश्च प्रवर्तंते तं परेशं प्रपद्ये ॥ ६ ॥ यस्य श्वासात्सर्वधात्री धरित्री देवो वर्षत्यंबु कालः प्रमाता । मेरुर्मध्ये भुवनानां च भर्ता तमीशानं विश्वरूपं नमामि ॥ ७ ॥ इति श्रीकल्किपुराणे कल्किकृतशिवस्तोत्रं संपूर्णम् ॥

## १२३. सदाशिवाष्टकम् ।

श्रीगणेशाय नमः ॥ शीर्षजटागणभारं गरलाहारं समस्तसंहारम् । कैलासाद्रिविहारं पारं भववारिधेरहं वंदे ॥ १ ॥ चंद्रकलोज्ज्वलभालं कंठव्यालं जगत्त्रयीपालम् । कृतनरमस्तकमालं कालं कालस्य

कोमलं वंदे ॥ २ ॥ कोपेक्षणहतकामं स्वात्मारामं नगेंद्रजावामम् । संसृतिशोकविरामं श्यामं कंठेन कारणं वंदे ॥ ३ ॥ कटितटविलसितनागं खंडितयागं महाद्भुतत्यागम् । विगतविषयरसरागं भागं यज्ञेषु बिभ्रतं वंदे ॥ ४ ॥ त्रिपुरादिकदनुजांतं गिरिजाकांतं सदैव संशांतम् । लीलाविजितकृतांतं भांतं स्वांतेषु देहिनां वंदे ॥ ५ ॥ सुरसरिदाप्लुतकेशं त्रिदशकुलेशं हृदालयावेशम् । विगताशेषक्लेशं देशं सर्वेष्टसंपदां वंदे ॥ ६ ॥ करतलकलितपिनाकं विगतजराकं सुकर्मणां पाकम् । परपदवीतवराकं नाकंगमपूगवंदितं वंदे ॥ ७ ॥ भूतिविभूषितकायं दुस्तरमायं विवर्जितापायम् । प्रमथसमूहसहायं सायंप्रातर्निरंतरं वंदे ॥ ८ ॥ यस्तु पदाष्टकमेतद्ब्रह्मानंदेन निर्मितं नित्यम् । पठति समाहितचेताः प्राप्नोत्यंते स शैवमेव पदम् ॥ ९ ॥ इति श्रीमत्परमहंसस्वामिब्रह्मानंदविरचितं सदाशिवाष्टकं संपूर्णम् ॥

## १२४. असितकृतशिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ असित उवाच ॥ जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च । योगीन्द्राणां च योगीन्द्र गुरूणां गुरवे नमः ॥ १ ॥ मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखंडन । मृत्योरीश मृत्युबीज मृत्युंजय नमोऽस्तु ते ॥ २ ॥ कालरूपं कलयतां कालकालेश कारण । कालादतीत कालस्य कालकाल नमोऽस्तु ते ॥ ३ ॥ गुणातीत गुणाधार गुणबीज गुणात्मक । गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥ ४ ॥ ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्पर । ब्रह्मबीजस्वरूपेण ब्रह्मबीज नमोऽस्तु ते ॥ ५ ॥ इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः । दीनवत्साश्रुनेत्रश्च पुलकांचितविग्रहः ॥ ६ ॥ असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । वर्षमेकं हविष्याशी शंकरस्य महात्मनः ॥ ७ ॥ स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिर-

जीविनम् । भवेद्धनाढ्यो दुःखी च मूको भवति पंडितः ॥ ८ ॥ अभार्यो लभते भार्यां सुशीलां च पतिव्रताम् । इह लोके सुखं भुक्त्वा यात्यन्ते शिवसंनिधिम् ॥ ९ ॥ इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे । प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥ १० ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे असितकृतशिवस्तोत्रं संपूर्णम् ॥

## १२५. चंद्रचूडालाष्टकम् ।

श्रीगणेशाय नमः ॥ यमनियमाद्यंगयुतैर्योगैर्यत्पादपंकजं द्रष्टुम् । प्रयतंते मुनिवर्यास्तमहं प्रणमामि चंद्रचूडालम् ॥ १ ॥ यमगर्वभंजनचणं नमतां सर्वेष्टदानधौरेयम् । शमदमसाधनसंपल्लभ्यं प्रणमामि चंद्रचूडालम् ॥ २ ॥ यं द्रोणबिल्वमुख्यैः पूजयतां द्वारि मत्तमातंगाः । कंठे लसंति विद्यास्तमहं प्रणमामि चंद्रचूडालम् ॥ ३ ॥ नलिनभवपद्मनेत्रप्रमुखामरसेव्यमानपदपद्मम् । नतजनविद्यादानप्रवणं प्रणमामि चंद्रचूडालम् ॥ ४ ॥ नुतिभिर्देववराणां मुखरीकृतमंदिरद्वारम् । स्तुतमादिमवाक्ततिभिः सततं प्रणमामि चंद्रचूडालम् ॥ ५ ॥ जंतोस्तव पादपूजनकरणात्करपद्मगाः पुमर्थाः स्युः । मुरहरपूजितपादं तमहं प्रणमामि चंद्रचूडालम् ॥ ६ ॥ चेतसि चिंतयतां यत्पदपद्मं सत्वरं वक्त्रात् । निःसरति वाक्सुधामा तमहं प्रणमामि चंद्रचूडालम् ॥ ७ ॥ नम्राज्ञानतमस्ततिदूरीकरणाय नेत्रलक्ष्माद्यः । धत्तेऽग्निचंद्रसूर्यांस्तमहं प्रणमामि चंद्रचूडालम् ॥ ८ ॥ अष्टकमेतत्पठतां स्पष्टतरं कष्टनाशनं पुंसाम् । अष्ट ददाति हि सिद्धिरिष्टसमष्टीश्च चंद्रचूडालः ॥ ९ ॥ इति चंद्रचूडालाष्टकं संपूर्णम् ॥

## १२६. शिवभक्तिकल्पलतिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीकान्तपद्मजमुखैर्हृदि चिंतनीयं श्रीमत्क शंकर भवच्चरणारविंदम् । क्वाहं तदेतदुपसेवितुमीहमानो हा हंत कस्य न भवाम्युपहासपात्रम् ॥ १ ॥ अद्राक्षमंघ्रिकमलं न तवेति यन्मे दुःखं यदप्यनवमृश्य दुरात्मतां स्वाम् । पादांबुजं तव दिदृक्ष इतीदृगागः पातोऽनले प्रतिकृतिर्गिरिशैतयोर्मे ॥ २ ॥ दौरात्म्यतो मम भवत्पददर्शनेच्छा मंतुस्तथापि तव सा भजनात्मिकेति । स्यादीशितुर्मयि दयैव दयामकार्षीरश्मादिभिः प्रहृतवत्सु न किं विभो त्वम् ॥ ३ ॥ दुःखानलोदरनिपातनधूर्वदेष्वेष्वर्थांगनासुत-मुखेष्वनुराग आगः । स्यात्ते रुषे तव दयालुतया त्वदानत्यावै-र्विभो तदवभूय बिभर्षि चास्मान् ॥ ४ ॥ ईशान रक्षितुमिमान्यद-पेक्षसे त्वं नत्यादिकं तदपनेतुमतिप्रसंगम् । किं हीयते तदनुपाधि-कृपालुता ते संविस्सुखस्य न हि ते प्रियमप्रियं वा ॥ ५ ॥ अप्या-हर प्रहर संहर वाग्वदस्य त्रातास्युपात्तममुना मम नाम हीति । एवं विभो तनुभृतामवनेऽप्युपायान्वेषी कथं परमकारुणिकोऽसि न त्वम् ॥ ६ ॥ त्राता दयाजलनिधिः स्मृतिमात्रलभ्यः क्षंतागसामिति भवद्यशसा हृतात्मा । त्वामस्मरन्बत मलीमसतामलज्जो भक्तिं भवत्यभिलषामि धिगस्तु यन्माम् ॥ ७ ॥ शर्माखिरार्तिविहतिश्च भवत्प्रसादं शंभोर्विना न हि नृणां स च नांतरा याम् । यस्यां विधिः श्वमुगपि क्षमते समं तां त्वद्भक्तिमिच्छतु न कः स्वविनाशभीरुः ॥ ८ ॥ भक्तिर्विभात्वयि महत्यपरं तु फल्गिव-त्येवं ग्रहो ननु भवत्कृपयैव लभ्यः । लब्धस्त्वसौ फलममुष्य लभे न किं वा तां हंत ते तदयशो मम हृद्रुजा च ॥ ९ ॥ त्वद्भक्त्य-संभवशुचं प्रतिकारशून्यामंतर्वहन्नखिलमीश सुखं च दुःखम् ।

उद्बंधलग्न इव दुःखतयैव मन्ये संवान्यतीति मयि हंत कदा दयेथाः ॥ १० ॥ भक्तिं भवत्यविहितां वहतस्तु तद्विशेषोपलंभविरहाहितमस्तु दुःखम् । तस्याः प्रतीपततिभिर्हतिजं कथं वा दुःखं सहे मयि कदेश कृपा भवेत्ते ॥ ११ ॥ क्षमः कृतांतवदनेऽस्मि क्षमे च नाद्याप्यपच्छां रतिं त्वयि शिवेत्यवसीदतो मे । त्वद्विस्मृतिं कुविषयाभिरतिप्रचारैस्तन्वन् हि मां हसपदं तनुषे श्रुवे किम् ॥ १२ ॥ बद्धस्पृहं रुचिरकांचनभूषणादौ बालं फलादिभिरिव त्वयि भक्तियोगे । आशाभराकुलमहो करुणानिधे मामर्थांतरैर्हतधियं कुरुषे किमेवम् ॥ १३ ॥ तिक्तग्रहोऽधि मधुरं मधुरग्रहोऽधि तिक्तं यथा भुजगदष्टतनोस्तथाऽहम् । त्वय्यन्तरक्तिरितरत्र तु गाढमग्नः शोच्योऽहमनोऽपि हि भवामि किमन्यदीश ॥ १४ ॥ त्वत्संस्मृतित्वदभिधानसमीरणादिसंभावनास्पदममी मम संतु शोकाः । मा संतु च त्वदनुषक्तिमुषः प्रहर्षा मा त्वत्पुरःस्थितिमुषेश दशानुपश्य ॥ १५ ॥ संपातनं ननु सुखेषु निपातनं वा दुःखेष्वथान्यदपि वा भवदेकतानम् । यत्कल्पयेर्ननु धिया शिव तद्विधेहि नावैम्यहं मम हितं शरणं गतस्त्वाम् ॥ १६ ॥ दुःखं प्रतिस्फुरयि मे यदि न प्रदद्या दुःखापहं पुरहर त्वयि भक्तियोगम् । त्वद्भक्त्यलाभपरिचिंतनसंभवं मे दुःखं प्रदेहि तव कः पुनरत्र भारः ॥ १७ ॥ भक्त्या त्वयीश कति नाश्रुपरीतदृष्ट्या संजातगद्गदगिरोत्पुलकांगयष्ट्या । धन्याः पुनंति भुवनं मम सा न हीति दुःखेऽपि का नु तव दुर्लभता विधित्सा ॥ १८ ॥ त्वद्भक्तिरेव सदनवासिमुगप्युदारा श्रीः सा च तावकजनाश्रयणे च लभ्या । उल्लंघ्य तावकजनान् हि तदर्थनागस्त्वय्याः सहस्व तदिदं भगवन्नमस्ते ॥ १९ ॥ सेवा त्वदाश्रयवतां प्रणयश्च

तेषु सिध्येहृदो मम यथाशु तथा दयार्द्राम् । दृष्टिं तवार्पय मयीश दयांबुराशे मैवं विभो विमुखता मयि दीनबंधो ॥ २० ॥ गौरीसखं हिमकरप्रभमंबुदाभं श्रीजानि वा शिववपुस्तव तज्जुषो ये । ते त्वां श्रिता वहसि मूर्ध्नि तदंघ्रिरेणुं तत्सेवनं मम कथं नु दयां विना ते ॥ २१ ॥ त्वद्भक्तिकल्पलतिकां कृपयार्पयेश मच्चित्तसीम्नि भवदीयकथासुधाभिः । तां वर्धय त्वदनुरागफलाढ्यमौलिं तन्मूल एव खलु मुक्तिफलं चकास्ति ॥ २२ ॥ निःस्वो धनागम इव त्वदुपाश्रितानां संदर्शने प्रमुदितस्त्वयि सांद्रहार्दः । आलोकयन् जगदशेषमिदं भवंतं कार्यस्त्वयेश कृपयाहमपास्तखेदः ॥ २३ ॥ यो भक्तिकल्पलतिकाभिधमिंदुमौलेरेवं स्तवं पठति तस्य तदैव देवः । तुष्टः स्वभक्तिमखिलेष्टदुहं ददाति यां प्राप्य नारदमुखैरुपयाति साम्यम् ॥ २४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदभिनव-नृसिंहभारतीस्वामिविरचितं शिवभक्तिकल्पलतिकास्तोत्रं संपूर्णम् ॥

## १२७. सुवर्णमालास्तुतिः ।

श्रीगणेशाय नमः ॥ अथ कथमपि मद्रसनां त्वद्गुणलेशैर्विशोधयामि विभो । सांब सदाशिव शंभो शंकर शरणं मे तव चरणयुगम् ॥ १ ॥ आखंडलमदखंडनपंडित तंडुप्रिय चंडीश विभो । सांब० ॥ २ ॥ इभचर्मांबर शंबररिपुवपुरपहरणोज्ज्वलनयन विभो । सांब० ॥ ३ ॥ ईश गिरीश नरेश परेश महेश बिलेशयभूषण भो । सांब० ॥ ४ ॥ उमया दिव्यसुमंगलविग्रहयालिंगितवामांग विभो । सांब० ॥ ५ ॥ ऊरीकुरु मामज्ञमनाथं दूरीकुरु मे दुरितं भो । सांब० ॥ ६ ॥ ऋषिवरमानसहंस चराचरजननस्थितिकारण भो । सांब० ॥ ७ ॥ ऋक्षाधीशकिरीट महोक्षारूढ विधृतरुद्राक्ष विभो । सांब० ॥ ८ ॥ लृवर्णद्वन्द्वमवृंतसुकुसुममिवाङ्घ्रौ तवार्प-

यामि विभो । सांब० ॥ ९ ॥ एकं सदिति श्रुत्या त्वमेव सदसीत्यु-
पास्महे मृड भो । सांब० ॥ १० ॥ ऐक्यं निजभक्तेभ्यो वितरसि
विश्वंभरोऽत्र साक्षी भो । सांब० ॥ ११ ॥ ओमिति तव निर्देष्ट्री
मायास्माकं मृडोपकर्त्री भो । सांब० ॥ १२ ॥ औदास्यं स्फुटयति
विषयेषु दिगम्बरता च तवैव विभो । सांब० ॥ १३ ॥ अन्तःकरण-
विशुद्धिं भक्तिं च त्वयि सतीं प्रदेहि विभो । सांब० ॥ १४ ॥
अस्तोपाधिसमस्तव्यस्तै रूपैर्जगन्मयोऽसि विभो । सांब० ॥ १५ ॥
करुणावरुणालय मयि दास उदासस्तवोचितो न हि भो । सांब०
॥ १६ ॥ खलसहवासं विघटय सतामेव संगमनिशं भो । सांब०
॥ १७ ॥ गरलं जगदुपकृतये गिलितं भवता समोऽस्ति कोऽत्र
विभो । सांब० ॥ १८ ॥ घनसारगौरगात्र प्रचुरजटाजूटबद्धगंग
विभो । सांब० ॥ १९ ॥ ज्ञप्तिः सर्वशरीरेष्वखंडिता या विभाति
सा सा त्वं भो । सांब० ॥ २० ॥ चपलं मम हृदयकपिं विषयद्रुचरं
दृढं बधान विभो । सांब० ॥ २१ ॥ छाया स्थाणोरपि तव तापं
नमतां हरत्यहो शिव भो । सांब० ॥ २२ ॥ जय कैलासनिवास
प्रमथगणाधीश भूसुरार्चित भो । सांब० ॥ २३ ॥ झणुतकझंकि-
णुझणुतत्किटतकशब्दैर्नटसि महानट भो । सांब० ॥ २४ ॥ ॥ ज्ञानं
विक्षेपावृतिरहितं कुरु मे गुरुस्त्वमेव विभो । सांब० ॥ २५ ॥
टंकारस्तव धनुषो दलयति हृदयं द्विषामशनिरिव भो । सांब०
॥ २६ ॥ ठाकृतिरिव तव माया बहिरंतःशून्यरूपिणी खलु भो ।
सांब० ॥ २७ ॥ डंबरमंबुरुहामपि दलयत्यनघं त्वदङ्घ्रियुगलं
भो । सांब० ॥ २८ ॥ ढक्काक्षसूत्रशूलद्रुहिणकरोटीसमुल्लसत्कर
भो । सांब० ॥ २९ ॥ णाकारगर्भिणी चेच्छुभदा ते शरणगति-
र्नृणामिह भो । सांब० ॥ ३० ॥ तव मन्वतिसंजपतः सद्यस्तरति

नरो हि भवाब्धिं भो । सांब० ॥ ३१ ॥ थूत्कारस्तस्य मुखे भूयात्ते नाम नास्ति यस्य विभो । सांब० ॥ ३२ ॥ दयनीयश्च दयालुः कोऽस्ति मदन्यस्त्वदन्य इव वद भो । सांब० ॥ ३३ ॥ धर्मस्थापनदक्ष त्र्यक्ष गुरो दक्षयज्ञशिक्षक भो । सांब० ॥ ३४ ॥ ननु ताडितोऽसि धनुषा लुब्धधिया त्वं पुरा नरेण विभो । सांब० ॥ ३५ ॥ परिमातुं तव मूर्तिं नालमजस्तत्परात्परोऽसि विभो । सांब० ॥ ३६ ॥ फलमिह नृतया जनुषस्त्वत्पदसेवा सनातनेश विभो । सांब० ॥ ३७ ॥ बलमारोग्यं चायुस्त्वद्गुणरुचितां चिरं प्रदेहि विभो । सांब० ॥ ३८ ॥ भगवन् भर्ग भयापह भूतपते भूतिभूषितांग विभो । सांब० ॥ ३९ ॥ महिमा तव नहि माति श्रुतिषु हिमानीधरात्मजाधव भो । सांब० ॥ ४० ॥ यमनियमादिभिरंगैर्यमिनो हृदये भजंति स त्वं भो । सांब० ॥ ४१ ॥ रज्जावहिरिव शुक्तौ रजतमिव त्वयि जगंति भांति विभो । सांब० ॥ ४२ ॥ लब्ध्वा भवत्प्रसादाच्चक्रं विधुरवति लोकमखिलं भो । सांब० ॥ ४३ ॥ वसुधातद्धरतच्छयरथमौर्वीशरपराकृतासुर भो । सांब० ॥ ४४ ॥ शर्व देव सर्वोत्तम सर्वद दुर्वृत्तगर्वहरण विभो । सांब० ॥ ४५ ॥ षड्रिपुषडूर्मिषड्विकारहर सन्मुख षण्मुखजनक विभो । सांब० ॥ ४६ ॥ सत्यं ज्ञानमनंतं ब्रह्मेत्येतल्लक्षणलक्षित भो । सांब० ॥ ४७ ॥ हाहाहूहूमुखसुरगायकगीतापदानपद्य विभो । सांब० ॥ ४८ ॥ ळादिर्न हि प्रयोगस्तदन्तमिह मंगळं सदाऽस्तु विभो । सांब० ॥ ४९ ॥ क्षणमिव दिवसान्नेष्यति त्वत्पदसेवाक्षणोत्सुकः शिव भो । सांब सदाशिव शंभो शंकर शरणं मे तव चरणयुगम् ॥ ५० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ सुवर्णमालास्तुतिः संपूर्णा ॥

## १२८. विश्वेशलहरी ।

श्रीगणेशाय नमः ॥ सिद्धिबुद्धिपतिं वंदे श्रीगणाधीश्वरं मुदा । तस्य यो वंदनं कुर्यात् स धीनां योगमिन्वति ॥ १ ॥ वंदे काशीपतिं काशी जाता यत्कृपया पुरी । प्रकाशनार्थं भक्तानां होतारं रत्नधातमम् ॥ २ ॥ भक्तावनं करोमीति मा गर्वं वह शंकर । तेभ्यः स्वपूजाग्रहणात्तवैतत्सत्यमंगिरः ॥ ३ ॥ मुधा लक्ष्मीं कामयंते चंचलां सकला जनाः । काशीरूपां कामयेऽहं लक्ष्मीमनपगामिनीम् ॥ ४ ॥ प्राप्नुवंतु जना लक्ष्मीं मदांधनृपसेवनात् । लभे विश्वेशसेवातो गामश्वं पुरुषानहम् ॥ ५ ॥ न मत्कुटुंबरक्षार्थं माह्वयामि श्रियं बुधाः । विश्वेश्वराराधनार्थं श्रियं देवीमुपह्वये ॥ ६ ॥ आपातरमणीयेयं श्रीर्मदांधकरी चला । असारसंसृतौ काशीं सा हि श्रीरमृता सताम् ॥ ७ ॥ काशी गंगान्नपूर्णा च विश्वेशाद्याश्च देवताः । अवंतु बालमज्ञं मामुशतीरिव मातरः ॥ ८ ॥ सदैव दुःखकारिणीं न संसृतिं हि कामये शिवप्रियां सुखप्रदां परां पुरीं हि कामये । स्वभक्तदुःखहारकं मनोरथप्रपूरकं शिवं सदा मुदा भजे महेरणाय चक्षसे ॥ ९ ॥ स्वसेवकसुतादीनां पालनं कुर्वते नृपाः । पास्येवास्मांस्तु विश्वेश गीर्वाणः पाहि नः सुतान् ॥ १० ॥ निषेव्य काशिकां पुरीं सदाशिवं प्रपूज्य वै गुरोर्मुखारविंदतः सदाद्विरूपमद्वयम् । विचार्य रूपमात्मनो निषेध्य नश्वरं जडं चिदात्मना तमोभिदं घनेन हन्मि वृश्चिकम् ॥ ११ ॥ हे भागीरथि हे काशि हे विश्वेश्वर ते सदा । कलयामि स्तवं श्रेष्ठमेव रारंतु ते हृदि ॥ १२ ॥ विश्वनाथ सदा काश्यां देहसभ्यं धनं परम् । पुरा युद्धेषु दैत्यानां विद्महे त्वां धनंजयम् ॥ १३ ॥ अविनाशि पुरा दत्तं भक्तेभ्यो द्रविणं त्वया । काशिविश्वेशगंगे त्वामथ

ते स्तुम्नमीमहे ॥ १४ ॥ संसारदाववह्नौ मां पतितं दुःखितं तव । विश्वेश पाहि गंगाधैरागत्य वृषभिः सुतम् ॥ १५ ॥ काशीं प्रति वयं याम दयया विश्वनाथ ते । तत्रैव वासं कुर्याम वृक्षे न वसतिं वयः ॥ १६ ॥ हे सरस्वति हे गंगे हे कालिंदि सदा वयम् । भजामामृतरूपं तं यो वः शिवतमो रसः ॥ १७ ॥ विश्वनाथेदमेव त्वां याचाम सततं वयम् । स्थित्वा काश्यामध्वरे त्वां हविष्मंतो जरामहे ॥ १८ ॥ सर्वासु सोमसंस्थासु काश्यामिंद्रस्वरूपिणे । हे विश्वेश्वर ते नित्यं सोमं चोदामि पीतये ॥ १९ ॥ काश्यां रौद्रेषु चान्येषु यजाम त्वां मखेषु वै । हे विश्वेश्वर देवैस्त्वं रारंधि सवनेषु नः ॥ २० ॥ मां मोहाद्या दुर्जनाश्च बाधंते निष्प्रयोजनम् । विश्वेश्वर ततो मे त्वां वरूत्रीं धिषणां वह ॥ २१ ॥ रुद्राक्षभस्मधारी त्वां काश्यां स्तौमीश संस्तवैः । त्वत्पादांबुजभृंगं मां न स्तोतारं निदेकरः ॥ २२ ॥ विहाय चंचलं वधूसुतादिकं हि दुःखदं त्वदीयकामसंयुता भवेम काशिकापुरी । स्वसेवकार्तिनाशक प्रकृष्टसंविदर्पक भवैव देव संततं ह्युतत्वमस्मयुर्वसो ॥ २३ ॥ विश्वेश काश्यां गंगायां स्नात्वा त्वां रम्यवस्तुभिः । पूजयाम वयं भक्त्या कुशिकासो अवस्यवः ॥ २४ ॥ विश्वेश नित्यमस्मभ्यं भयमुत्पादयंति ये । तेषां विधायोपमर्दं ततो नो अभयं कृधि ॥ २५ ॥ राक्षसानां स्वभावोऽयं बाध्या विश्वेश जीवकाः । भक्तानुकंपया शंभो सर्वं रक्षो निबर्हय ॥ २६ ॥ विश्वेश्वर सदा भीतः संसारार्णवजनात् । मां पालय सदेति त्वां पुरुहूतमुपब्रुवे ॥ २७ ॥ इदं विमृश्य नश्वरं जडं सदैव दुःखदं समर्चितुं शिवं गताः परां पुरीं यतो द्विजाः । ततोऽभिगम्य तां पुरीं समर्च्य वस्तुभिः परैः शिवं स्वभक्तमुक्तिदं तमित्यखित्व ईमहे ॥ २८ ॥ काश्यां वयं सदैव त्वां यजाम

सकलैर्मखैः । विश्वेश्वर त्वं समप्रैर्देवैरासत्सि बर्हिषि ॥ २९ ॥ यद्वे-
श्वरेण रक्षितं श्रेष्ठ धनमस्त्वेषु ते । देहि व्ययाय शंकर ह्यस्मभ्यम-
प्रतिष्कृतः ॥ ३० ॥ मत्पूर्वजा महाशैवा भस्मरुद्राक्षधारिणः ।
विश्वेश्वर सुरेषु त्वामह्वसमिव येमिरे ॥ ३१ ॥ शंभोर्विधाय येऽर्चनं
तिष्ठंति तत्परा यदा । तान् शंकरो गिरे श्रुतं यूथेन वृष्णिरेजति
॥ ३२ ॥ त्वां पूजयामीश सुरं मानसैर्दिव्यवस्तुभिः । हे विश्वेश्वर
देवैस्त्वं सोम रारंधि नो हृदि ॥ ३३ ॥ प्रादुर्भवसि सद्यस्त्वं क्लेशो
भक्तजने यदा । ततोऽहं क्लेशवान् कुर्वे सद्योजाताय वै नमः ॥ ३४ ॥
वामदेवेति मनू रम्यतां यस्य मंजगौ । ईशस्तस्मात्क्रियते वामदेवाय
ते नमः ॥३५॥ दयासिन्धो दीनबन्धो योऽस्तीश वरदः करः । अस्माकं
वरदानेन स युक्तस्तेऽस्तु दक्षिणः ॥ ३६ ॥ दुष्टभीतस्य मे नित्यं
करस्तेऽभयदायकः । महेशाभयदाने स्यादुत सव्यः शतक्रतो ॥३७॥
महेश्वरीयपदपद्मसेवकः पुरंदरादिपदनिःस्पृहः सदा । जनोऽस्मि यः
सततदुर्गतः प्रभो पृणक्षि वसुना भवीयसा ॥ ३८ ॥ रक्षणाय
नास्ति मे त्वां विनेश साधनम् । निश्चयेन हे शिव त्वामवस्युराचके
॥ ३९ ॥ रोगैर्दुःखैर्वैरिगणैश्च युक्तास्त्वद्दासत्वाच्छंकर तत्सहस्व ।
रम्यं स्तोत्रं रोषकरं वचो वा यत्किंचाहं त्वायुरिदं वदामि ॥ ४० ॥
ध्यायाम वस्तु शंकरं याचाम धाम शंकरम् । कुर्याम कर्म शंकरं
वोचेम शंतमं हृदे ॥ ४१ ॥ माता तातः स्वादिष्ठं च पौष्टिकं
मन्वाते वाक्यं बालस्य कुत्सितम् । यद्वत्तद्वाक्यं मेऽस्तु शंभवे
स्वादोः स्वादीयो रुद्राय बंधनम् ॥ ४२ ॥ शिवं सुगन्धिसंयुतं
स्वभक्तपुष्टिवर्धनम् । सुदीनभक्तपालकं त्रियम्बकं यजामहे
॥ ४३ ॥ देव देव गिरिजावल्लभ त्वं पाहि पाहि शिव शंभो महेश ।
यद्वदामि सततं स्तोत्रवाक्यं तज्जुषस्व कृधि मा देववन्तम् ॥ ४४ ॥

त्यक्त्वा सदा निष्फलकार्यभारं धृत्वा सदा शंकरनामसारम् । हे जीव जन्मांतकनाशकारं यक्ष्यामहे सौमनसाय रुद्रम् ॥ ४५ ॥ स्थित्वा काश्यां निर्मलगंगातोये स्नात्वा संपूज्य त्रिदशेश्वरं वै । तस्य स्तोत्रं पापहरैस्तु देव भद्रं कर्णेभिः शृणुयाम देवाः ॥ ४६ ॥ वाराणस्यां शंकरं सुराढ्यं संपूज्येशं वसुभिः सुकांतैः । अग्रे नृत्यंतः शिवस्य रूपं भद्रं पश्येमाक्षभिर्यजत्राः ॥ ४७ ॥ इच्छामस्त्वां पूजयितुं वयं विश्वेश संततम् । प्रयच्छ नो धनं श्रेष्ठं यशसं वीरवत्तमम् ॥ ४८ ॥ काश्यामुषित्वा गंगायां स्नात्वा संपूज्य शंकरम् । ध्यात्वा तच्चरणौ नित्यमलक्ष्मीर्नाशयाम्यहम् ॥ ४९ ॥ असत्पदं स्वहर्षदं न चान्यहर्षदायकं सदा मुदा प्रसूर्यथा शृणोति भाषितं शिशोः । शिवापगाशिवाबलाशिवालया-समन्वितस्तथा शिवेश नः सुरैर्गिरामुपश्रुतिं चर ॥ ५० ॥ सगरस्यात्मजा गंगे मताः संतारितास्त्वया । अगरस्यात्मजा तस्मात् किं न तारयसि ध्रुवम् ॥ ५१ ॥ प्रायिकोऽयं प्रवादोऽस्तु तरंति तव संनिधौ । तारकं नाम ते गंगे संनिधेः किं प्रयोजनम् ॥ ५२ ॥ मीनैरायतलोचने वसुमुखीवाब्जेन रोमावलीयुक्तो राजवतीव पद्ममुकुलैः शैवालवल्ल्या युतैः । उद्धास्वजघनेन वालपुलिनैरुच्चकुचेवोर्मिभिर्गर्तेनोज्ज्वलनाभिकेव विलसत्येषा परं जाह्नवी ॥ ५३ ॥ शृंगारितां जलचरैः शिवसुंदरांगसंगां सदापहृतविश्वधवांतरंगाम् । भृंगाकुलांबुजगलन्मकरंदतुंदभृंगावलीविलसितां कलयेऽथ गंगाम् ॥ ५४ ॥ विश्वेशोऽसि धनाधिपप्रियसखा किं चान्नपूर्णापतिर्जामाता धरणीभृतो निरुपमाष्टैश्वर्ययुक्तः स्वयम् । चत्वार्येव तथापि दास्यसि फलान्यात्माश्रयांते चिरं तेभ्योऽतो बत युज्यते पशुपते लब्धावतारस्तव ॥ ५५ ॥ दोषाकरं वहसि मूर्ध्नि कलंकवंतं कंठे

द्विजिह्वमतिवक्रगतिं सुघोरम् । पापीत्ययं मयि कुतो न कृपां करोषि युक्तैव ते विषमदृष्टिरतो महेश ॥ ५६ ॥ अस्ति त्रिनेत्रसुहृराजकला ममेति गर्वायते ह्यतितरां बत विश्वनाथ । त्वद्वासिनो जनन्कशिशशांकचूडाभालेक्षणाश्च न भवंति जनाः कियंतः ॥ ५७ ॥ कामं संत्यज नश्वरेऽत्र विषये वामं पदं मा विश क्षेमं चात्मन आचर त्वमदयं कामं स्मरस्वांतकम् । भीमं दंडधरस्य योगिहृदयारामं शिरप्रोल्लसत्सोमं भावय विश्वनाथमनिशं सोमं सखे मानसे ॥ ५८ ॥ संपूज्य त्रिदशवरं सदाशिवं यो विश्वेशस्तुतिलहरीं सदा पठेद्वै । कैलासे शिवपदकंजराजहंस आकल्पं स हि निवसेच्छिवस्वरूपः ॥ ५९ ॥ अनेन प्रीयतां देवो भगवान् काशिकापतिः । श्रीविश्वनाथः पूर्वेषामस्माकं कुलदैवतम् ॥ ६० ॥ इयं विश्वेशलहरी रचिता खण्डयज्वना । विश्वेशतुष्टिदा नित्यं वसतां हृदये सताम् ॥ ६१ ॥ नाम्ना गुणैश्चापि शिवैव माता तातः शिवस्त्र्यम्बकयज्वनामा । मल्लारिदेवः कुलदैवतं मे श्रीकौशिकस्यास्ति कुले च जन्म ॥ ६२ ॥ इति श्रीगणेशदीक्षितात्मजत्र्यम्बकदीक्षिततनूजखण्डराजदीक्षितविरचिता विश्वेशलहरी संपूर्णा ॥

## १२९. विष्णुकृतशिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥ ॐ नमो भगवते महापुरुषाय सर्वगुणसंख्यानायानंतायाव्यक्ताय नम इति ॥ १ ॥ भजे भवान्या रणपादपंकजं भगस्य कृत्स्नस्य परं परायणम् । भक्तेष्वलं भावितभूतभावनं भवापहं त्वा भवभावमीश्वरम् ॥ २ ॥ न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते । ईशे यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः ॥ ३ ॥ असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः । न

नागवध्वोऽर्हेण ईशिरे ह्रिया यत्पादयोः स्पर्शनधर्षितेंद्रियाः ॥ ४ ॥ यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनंतमृष्टयः । न वेदसिद्धार्थमिव क्वचित्स्थितं भूमंडलं मूर्धसहस्रधामसु ॥ ५ ॥ यस्याद्य आसीद्गुणविग्रहो महान्विज्ञानधिष्ण्यो भगवानजः किल । यत्संभवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैंद्रियं सृजे ॥ ६ ॥ एते वयं यस्य वशे महात्मनः स्थिताः शकुंता इव सूत्रयंत्रिताः । महानहं वैकृततामसेंद्रियाः सृजाम सर्वे यदनुग्रहादिदम् ॥ ७ ॥ यन्निर्मितां कर्ह्यपि कर्मपर्वणीं मायां जनोऽयं गुणसर्गमोहितः । न वेद निस्तारणयोगमंजसा तस्मै नमस्ते विलयोदयात्मने ॥ ८ ॥ इति श्रीमद्भागवतान्तर्वर्ति विष्णुकृतं शिवस्तोत्रं समाप्तम् ॥

## १३०. चन्द्रमौलीशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐकारजपरतानामोंकारार्थं मुदा विवृण्वानम् । ओजःप्रदं नतेभ्यस्तमहं प्रणमामि चंद्रमौलीशम् ॥ १ ॥ नम्रसुरासुरनिकरं नलिनाहंकारहारिपदयुगलम् । नमदिष्टदानधीरं सततं प्रणमामि चंद्रमौलीशम् ॥ २ ॥ मननाद्यत्पदयोः खलु महतीं सिद्धिं जवात्प्रपद्यंते । मंदेतरलक्ष्मीप्रदमनिशं प्रणमामि चंद्रमौलीशम् ॥ ३ ॥ शितिकंठमिंदुदिनकरशुचिलोचनमंबुजाक्षविधिसेव्यम् । नतमतिदानधुरीणं सततं प्रणमामि चंद्रमौलीशम् ॥ ४ ॥ वाचो विनिवर्तंते यस्मादप्राप्य सह हृदैवेति । गीयंते श्रुतितातिभिस्तमहं प्रणमामि चंद्रमौलीशम् ॥ ५ ॥ यच्छंति यत्पदांबुजभक्ताः कुतुकात्स्वभक्तेभ्यः । सर्वानपि पुरुषार्थांस्तमहं प्रणमामि चंद्रमौलीशम् ॥ ६ ॥ पंचाक्षरमनुवर्णैरादौ कृतां

स्तुतिं पठेदेनाम् । प्राप्य दृढां शिवभक्तिं भुक्त्वा भोगाँल्लभेत मुक्तिमपि ॥ ७ ॥ इति चंद्रमौलीशस्तोत्रं संपूर्णम् ॥

## १३१. जन्मसागरोत्तारणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीरामपूजितपदांबुज चापपाणे श्रीचक्रराजकृतवास कृपांबुराशे । श्रीसेतुमूलचरणप्रवणांतरंग श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ १ ॥ नम्रावबृंदविनिवारणबद्धदीक्ष शैलाधिराजतनयापरिरब्धवर्ष्मन् । श्रीनाथमुख्यसुरवर्यनिषेवितांघ्रे श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ २ ॥ शूराहितेभवदनाश्रितपार्श्वभाग क्रूरारिवर्गविजयप्रद शीघ्रमेव । साराखिलागमतदंतपुराणपङ्क्तेः श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ ३ ॥ शब्दादिमेषु विषयेषु समीपगेष्वप्यासक्तिगंधरहिताब्जिपादनम्रान् । कुर्वाण कामदहनाक्षिलसल्ललाट श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ ४ ॥ इति जन्मसागरोत्तारणस्तोत्रं संपूर्णम् ॥

## १३२. अभिलाषाष्टकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ एकं ब्रह्मैवाद्वितीयं समस्तं सत्यं सत्यं नेह नानास्ति किंचित् । एको रुद्रो न द्वितीयोऽवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ॥ १ ॥ एकः कर्ता त्वं हि सर्वस्य शंभो नानारूपेष्वेकरूपोऽप्यरूपः । यद्वत्प्रत्यक्पूर्ण एकोऽप्यनेकस्तस्मान्नान्यं त्वां विनेशं प्रपद्ये ॥ २ ॥ रज्जौ सर्पः शुक्तिकायां च रौप्यं पयःपूरस्तन्मृगाख्ये मरीचौ । यद्वत्तद्वद्विष्वगेव प्रपञ्चो यस्मिन् ज्ञाते तं प्रपद्ये महेशम् ॥ ३ ॥ तोये शैत्यं दाहकत्वं च वह्नौ तापो भानौ शीतभानौ प्रसादः । पुष्पे गन्धो दुग्धमध्ये च सर्पिर्यत्तच्छंभो त्वं ततस्त्वां प्रपद्ये ॥ ४ ॥ शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रेरघ्राणस्त्वं व्यंघ्रिरायासि दूरात् । व्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः कस्त्वां

सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥ ५ ॥ नो वेदस्त्वामीश साक्षाद्विवेद नो वा विष्णुर्नो विधाताऽखिलस्य । नो योगीन्द्रा नेन्द्रमुख्याश्च देवा भक्तो वेद त्वामतस्त्वां प्रपद्ये ॥ ६ ॥ नो ते गोत्रं नेश जन्मापि नाख्या नो त्वा रूपं नैव शीलं न देशः । इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्या सर्वान्कामान् पूरयेस्तद्भजे त्वाम् ॥ ७ ॥ त्वत्तः सर्वं त्वं हि सर्वं स्मरारे त्वं गौरीशस्त्वं च नग्नोऽतिशान्तः । त्वं वै वृद्धस्त्वं युवा त्वं च बालस्तत्त्वं यत्किं नास्त्यतस्त्वां नतोऽस्मि ॥ ८ ॥ स्तुत्वेति विप्रो निपपात भूमौ स दंडवद्यावदतीव हृष्टः । तावत्स बालोऽखिलवृद्धवृद्धः प्रोवाच भूदेव वरं वृणीहि ॥ ९ ॥ तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती । प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो ॥ १० ॥ सर्वान्तरात्मा भगवान् सर्वः सर्वप्रदो भवान् । याच्ञां प्रति नियुंक्ते मां किमीशो दैन्यकारिणीम् ॥ ११ ॥ इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह । शुचेः शुचिव्रतस्याथ शुचि स्मित्वाब्रवीच्छिशुः ॥ १२ ॥ बाल उवाच ॥ त्वया शुचे शुचिष्मत्यां योऽभिलाषः कृतो हृदि । अचिरेणैव कालेन स भविष्यत्यसंशयम् ॥ १३ ॥ तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते । ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः ॥ १४ ॥ अभिलाषाष्टकं पुण्यं स्तोत्रमेतन्मयेरितम् । अब्दं त्रिकालपठनात्कामदं शिवसंनिधौ ॥ १५ ॥ एतत्स्तोत्रस्य पठनं पुत्रपौत्रधनप्रदम् । सर्वशान्तिकरं वापि सर्वापत्त्यरिनाशनम् ॥ १६ ॥ स्वर्गापवर्गसंपत्तिकारकं नात्र संशयः । प्रातरुत्थाय सुस्नातो लिङ्गमभ्यर्च्य शांभवम् ॥ १७ ॥ वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान् भवेत् । वैशाखे कार्तिके माघे विशेषनियमैर्युतः ॥ १८ ॥ यः पठेत् स्नानसमये स लभेत्सकलं फलम् । कार्तिकस्य तु मासस्य प्रसादादहमव्ययः ॥ १९ ॥

तव पुत्रत्वमेष्यामि यास्त्वन्यस्तत्पठिष्यति । अभिलाषाष्टकमिदं न देयं यस्य कस्यचित् ॥ २० ॥ गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् । स्त्रिया वा पुरुषेणापि नियमाल्लिङ्गसंनिधौ ॥ २१ ॥ अब्दं जप्तमिदं स्तोत्रं पुत्रदं नात्र संशयः । इत्युक्त्वान्तर्दधे बालः सोऽपि विप्रो गृहं ययौ ॥ २२ ॥ इति श्रीस्कंदपुराणे काशीखंडेऽभिलाषाष्टकस्तोत्रं संपूर्णम् ॥

## १३३. श्रीदूर्वेशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ गणनाथषण्मुखयुक्तो गिरिजाश्लेषतुष्टहृदयाब्जः । दूर्वाभिख्यपुरस्थान् लोकान् परिपातु भक्तिविनययुतान् ॥ १ ॥ विद्यानाथ विनीतिभक्तिसहितान् लोकान् कृपावारिधे दूर्वाभिख्यपुरस्थितान् करुणया पाहीभवक्त्रं यथा । विद्यायुःसुखयुक्तिशक्तिभिरलं युक्तान् विधायानिशं शांत्याद्यैरपि दिव्यमुक्तिपदवीसंदर्शकैः शंकर ॥ २ ॥ इति श्रीदूर्वेशस्तोत्रं संपूर्णम् ॥

## १३४. शशांकमौलीश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मांगल्यदाननिरत प्रणमज्जनानां मांधातृमुख्यधरणीपतिचिंतितांघ्रे । मांद्यांधकारविनिवारणचंडभानो मां पाहि धीरगुरुभूत शशांकमौले ॥ १ ॥ मां प्राप्नुयादखिलसौख्यकरी सुधीश्च माकंदतुल्यकविता सकलाः कलाश्च । कान्तिस्त्वमत्पदसरोजनतेर्हि स त्वं मां पाहि धीरगुरुभूत शशांकमौले ॥ २ ॥ मातंगकृत्तिवसन प्रणतार्तिहारिन्मायासरित्पतिविशोषणवाडवाग्ने । मानोन्नतिप्रद निजांघ्रिजुषां नराणां मां पाहि धीरगुरुभूत शशांकमौले ॥ ३ ॥ इति शशांकमौलीश्वरस्तोत्रं संपूर्णम् ॥

## १३५. विश्वमूर्तिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अकारणायाखिलकारणाय नमो महाकारण-कारणाय । नमोऽस्तु कालानललोचनाय कृतागसं मामव विश्वमूर्ते ॥ १ ॥ नमोऽस्त्वहीनाभरणाय नित्यं नमः पशूनां पतये मृडाय । वेदांतवेद्याय नमो नमस्ते कृता० ॥ २ ॥ नमोऽस्तु भक्तेहितदानदात्रे सर्वौषधीनां पतये नमोऽस्तु । ब्रह्मण्यदेवाय नमो नमस्ते कृतागसं० ॥ ३ ॥ कालाय कालानलसन्निभाय हिरण्यगर्भाय नमो नमस्ते । हालाहलादाय सदा नमस्ते कृतागसं० ॥ ४ ॥ विरिञ्चिनारायणशक्र-मुख्यैरज्ञातवीर्याय नमो नमस्ते । सूक्ष्मातिसूक्ष्माय नमोऽघहंत्रे कृतागसं० ॥ ५ ॥ अनेककोटींदुनिभाय तेऽस्तु नमो गिरीणां पतयेऽघहंत्रे । नमोऽस्तु ते भक्तविपद्धराय कृतागसं० ॥ ६ ॥ सर्वां-तरस्थाय विशुद्धधाम्ने नमोऽस्तु ते दुष्टकुलांतकाय । समस्ततेजोनिधये नमस्ते कृतागसं० ॥ ७ ॥ यज्ञाय यज्ञादिफलप्रदात्रे यज्ञस्वरूपाय नमो नमस्ते । नमो महानंदमयाय नित्यं कृतागसं० ॥ ८ ॥ इति स्तुतो महादेवो दक्षं प्राह कृताञ्जलिम् । यत्तेऽभिलषितं दक्ष तत्ते दास्याम्यहं ध्रुवम् ॥ ९ ॥ अन्यच्च शृणु भो दक्ष यच्च किञ्चिद्ब्रवी-म्यहम् । यत्कृतं हि मम स्तोत्रं त्वया भक्त्या प्रजापते ॥ १० ॥ ये श्रद्धया पठिष्यंति मानवाः प्रत्यहं शुभम् । निष्कल्मषा भविष्यंति सापराधा अपि ध्रुवम् ॥ ११ ॥ इति दक्षकृतं विश्वमूर्तिस्तोत्रं संपूर्णम् ॥

## १३६. भवभंजनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ रदच्छदाधःकृतबिम्बगर्वः पदप्रणम्राहित-सर्वविघ्नः । कैलासशृङ्गादृतनित्यवासो धुनोतु शीघ्रं भवबन्धमीशः ॥ १ ॥ राकाशशाङ्कप्रतिमानकान्तिः कोकाहितप्रोल्लसदुत्तमाङ्गः ।

शैलेन्द्रजालिङ्गितवामभागो धुनोतु शीघ्रं भवबन्धमीशः ॥ २ ॥ य इदं परमं स्तोत्रं भवभंजननामकम् । संपठेत् प्रातरुत्थाय शुचिर्भूत्वा समाहितः ॥ ३ ॥ भवदुःखविनिर्मुक्तो जायते सुरपूजितः । न पुनर्लभते जन्म भुवि शंभुप्रसादतः ॥ ४ ॥ इति भवभंजनस्तोत्रं संपूर्णम् ॥

## १३७. अष्टमूर्तिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ईशा वास्यमिदं सर्वं चक्षोः सूर्यो अजायत । इति श्रुतिरुवाचातो महादेवः परावरः ॥ १ ॥ अष्टमूर्तेरसौ सूर्यो मूर्तित्वे परिकल्पितः । नेत्रत्रिलोचनस्यैकमसौ सूर्यस्तदाश्रितः ॥ २ ॥ यस्य भासा सर्वमिदं विभातीति श्रुतेरिमे । तमेव भांतमीशानमनुभांति खगादयः ॥ ३ ॥ ईशानः सर्वविद्यानां भूतानां चेति च श्रुतेः । वेदादीनामप्यधीशः स ब्रह्मा कैर्न पूज्यते ॥ ४ ॥ यस्य संहारकाले तु न किञ्चिदवशिष्यते । सृष्टिकाले पुनः सर्वं स एकः सृजति प्रभुः ॥ ५ ॥ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । इति श्रुतेर्महादेवः श्रेष्ठोऽयं सकलाश्रितः ॥ ६ ॥ विश्वं भूतं भवद्भव्यं सर्वं रुद्रात्मकं श्रुतम् । मृत्युञ्जयस्तारकोऽतः स यज्ञस्य प्रसाधनः ॥ ७ ॥ विषमाक्षोऽपि समदृक् सशिवोऽपि शिवः स च । वृषसंस्थोऽप्यतिवृषो गुणात्माऽप्यगुणोऽमलः ॥ ८ ॥ यदाज्ञामुद्वहंत्यत्र शिरसा सासुराः सुराः । अग्नं वातो वर्षं इतीषवो यस्य स विश्वपाः ॥ ९ ॥ भिषक्तमं त्वा भिषजां शृणोमीति श्रुतेरयम् । स्वभक्तसंसारमहारोगहर्ताऽपि शंकरः ॥ १० ॥ इत्यष्टमूर्तिस्तोत्रं संपूर्णम् ॥

## १३८. इन्दुमौलिस्मरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कलय कलावित्प्रवरं कलया नीहारदीधितेः शीर्षम् । सततमलंकुर्वाण प्रणतावनदीक्ष यक्षराजसख ॥ १ ॥ कांतागेन्द्रसुतायाः शांताहंकारचिंत्यचिद्रूप । कांतारखेलनरुचे शांतांतःकरणं दीनमव शंभो ॥ २ ॥ दाक्षायणीमनोंबुजभानो वीक्षावितीर्णविनतेष्ट । द्राक्षामधुरिमसदृभरशिक्षाकर्त्रीं प्रदेहि मम वाचम् ॥ ३ ॥ पारदसमानवर्णो नीरदनीकाशदिव्यगलदेशः । पादनतदेवसंघः पशुमनिशं पातु मामीशः ॥ ४ ॥ भव शंभो गुरुरूपेणाशु मेऽद्य करुणाब्धे । चिरतरमिह वासं कुरु जगतीं रक्षन् प्रबोधदानेन ॥ ५ ॥ यक्षाधिपसखमनिशं रक्षाचतुरं समस्तलोकानाम् । वीक्षावापितकवितं दाक्षायण्याः पतिं नौमि ॥ ६ ॥ यमनियमनिरतलभ्यं शमदमुखपद्मदानकृतदीक्षम् । रमणीयपदसरोजं शमनाहितमाश्रये सततम् ॥ ७ ॥ यमिहन्मानसहंसं शमिताघौघं प्रणाममात्रेण । अमितायुःप्रदपूजं कमितारं नौमि शैलतनयायाः ॥ ८ ॥ येन कृतमिन्दुमौले मानववर्येण तावकस्मरणम् । तेन जितं जगदखिलं को न ब्रूते सुरार्यतुल्येन ॥ ९ ॥ इति इन्दुमौलिस्मरणस्तोत्रं संपूर्णम् ॥

## १३९. ईशानस्तवः ।

श्रीगणेशाय नमः ॥ यः षड्वक्त्रगजाननाद्भुतसुताविष्कारणव्यंजिताचिंत्योत्पादनवैभवां गिरिसुतां मायां निजांगे दधत् । सेव्यां संसृतिहानये त्रिपथगां विद्यां च मूर्ध्ना वहन् स्वं ब्रह्मत्वमभिव्यनक्ति भजतः पायात् स गंगाधरः ॥ १ ॥ यस्यालोच्य कपर्ददुर्गविलुठद्गंगांबुशैत्यात्त्यच्छतामाधुर्याणि पराजयोदितशुचा क्षीणः कलामात्रवान् । बिभ्रत् पित्सति नूनमुत्कटजटाजूटोच्चकूटाच्छशी काला-

टाक्षिशिखासु सोऽस्तु भजतां भव्याय गंगाधरः ॥ २ ॥ यल्लालाट-कृपीटयोनिसततासंगाद्विलीनः शशी गंगारूपमुपेत्य तत्प्रशमनाशक्तः कृशांगः शुचा । उद्भ्राम्यति तनुं त्रपापरवशो मन्ये जटादामभिः पायात् स्तव्यविभाव्यनव्यचरितो भक्तान् स गंगाधरः ॥ ३ ॥ अंकारूढधराधराधिपसुतासौंदर्यसंतर्जिता गंगा यस्य कपर्ददुर्गभवने लीना विलीना ह्रिया । चिंतापांडुतनुः स्खलंत्यविरतं पार्वत्यसूया-स्निग्धरंतर्धि बहु मन्यतेऽस्तु भजतां भूत्यै स गंगाधरः ॥ ४ ॥ मुग्धां स्निग्ध इव प्रतार्य गिरिजामर्धाङ्गदानच्छलान्नित्योयद्बहुलभ्रमां त्रिपथगामात्मोत्तमांगे वहन् । स्थाने यो विषमेक्षणत्वपदवीमारोप्यते कोविदैः प्रच्छन्नप्रणयक्रमोऽस्तु भजतां प्रीत्यै स गंगाधरः ॥ ५ ॥ सेवासन्नसुरासुरेंद्रपरिषद्दूराकीर्णपुष्पाञ्जलिप्रक्ष्योतन्मकरंद-बिंदुसततासारः पतन्मस्तके । यस्याविश्रमसंभृतत्रिपथगानाम्ना जनैः ख्याप्यते स त्रैलोक्यनिषेवितांघ्रियुगलः पुष्णातु गंगाधरः ॥६॥ यस्मिन्नुद्धततांडवैकरसतासाटोपनाट्यक्रमे विश्वस्तासु जटासु भासुर-तनुर्धाराशतैः पातुका । गंगाजंगमवारिपर्वतधियं चित्ते विधत्ते सतामेवं चित्रविभूतिरस्तु भजतां भव्याय गंगाधरः ॥ ७ ॥ यो गंगापयसि प्रभो तव महानत्यादरः कल्पते संमूर्च्छद्विषयापनाय विषये कुप्यस्यसत्योक्तये । ईशानस्तवसागरांतगमने वाण्यः पुराण्योऽक्षमाः संक्षिप्येत्थमभिष्टुतः सस्मितगुः प्रीतोऽस्तु गंगाधरः ॥ ८ ॥ इतीशानस्तवः संपूर्णः ॥



# गायत्रीस्तोत्राणि ।




| | | | | | | | |
|---|---|---|---|---|---|---|---|
| त | म | धी | स्य | ब | दे | र्गो | भ |
| स | हि | रो | प | वीं | ब | त् | ण्यं |
| वि | धि | र | ज | सः | सा | या | रे |
| तु | धी | यो | नः | म | चो | द | वे |

ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

# गायत्रीस्तोत्राणि ।

## १४०. गायत्रीशापोद्धारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीब्रह्मशापविमोचनमंत्रस्य निग्रहानुग्रहकर्ता प्रजापतिर्ऋषिः, कामदुघा गायत्री छंदः, ॐ ब्रह्मशापविमोचनी गायत्री शक्तिर्देवता, ब्रह्मशापविमोचनार्थे जपे विनियोगः ॥ सवितुर्ब्रह्म मेत्युपासनात्तद्ब्रह्मविदो विदुस्तां प्रयतंति धीराः । सुमनसा वाचा ममाग्रतः । ब्रह्मशापाद्विमुक्ता भव ॥ ॐ विश्वामित्रशापविमोचनमंत्रस्य नूतनसृष्टिकर्ता विश्वामित्रऋषिः, वाग्देहा गायत्रीछंदः, भुक्तिमुक्तिप्रदा विश्वामित्रानुगृहीता गायत्री शक्तिः, सविता देवता, विश्वामित्रशापविमोचनार्थे जपे विनियोगः ॥ तत्त्वानि चांगेष्वभिचितो धियांसस्त्रिगर्भा यदुद्भवा देवाश्चोचिरे विश्वसृष्टिम् । तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखान्निःसृतो वेदगर्भः ॥ ॐ गायत्रि त्वं विश्वामित्रशापाद्विमुक्ता भव ॥ ॐ वसिष्ठशापविमोचनमंत्रस्य वसिष्ठऋषिः, विश्वोद्भवा गायत्रीछंदः, वसिष्ठानुगृहीता गायत्री शक्तिर्देवता, वसिष्ठशापविमोचनार्थे जपे विनियोगः ॥ तत्त्वानि चांगेष्वभिचितो धियांसः ध्यायति विष्णोरायुधानि बिभ्रत् । जनानता सा परमा च शश्वत् । गायत्रीमासाद्यनुत्तम च धाम ॥ ॐ गायत्रीवसिष्ठशापाद्विमुक्ता भव । सोऽहमर्कमहं ज्योतिरर्को ज्योतिरहं शिवः । आत्मज्योतिरहं शुक्रं शुक्रं ज्योतीरसोऽहमोम् ॥ अहो विष्णुमहेशेशे दिव्ये सिद्धि सरस्वति । अजरे अमरे चैव दिव्ययोनि नमोऽस्तु ते ॥ अथ गायत्रीध्यानम् ॥ यद्देवैः सुरपूजितं परतरं सामर्थ्यतारात्मकं पुन्नागांबुजपुष्पनागबकुलैः केवैः शुकैरर्चितम् । नित्यं ध्यानसमस्तदीप्तिकरणं कालाग्निरुद्दीपनं

तत्संहारकरं नमामि सततं पातालसंस्थं मुखम् ॥ इति गायत्रीशापोद्धारस्तोत्रं संपूर्णम् ॥

## १४१. गायत्रीकवचम् ।

श्रीगणेशाय नमः ॥ श्रीपार्वत्युवाच ॥ देवदेव महादेव संसारार्णवतारकम् । गायत्रीकवचं देव कृपया कथय प्रभो ॥ १ ॥ श्रीमहादेव उवाच ॥ मूलाधारे स्थिता नित्यं कुंडली तत्त्वरूपिणी । सूक्ष्मातिसूक्ष्मपरमा बिसतंतुस्वरूपिणी ॥ २ ॥ विद्युत्पुञ्जप्रतीकाशा कुंडली श्रुतिसर्पिणी । परस्य ब्रह्मग्रहणी पञ्चाशद्वर्णरूपिणी ॥ ३ ॥ शिवस्य नर्तकी नित्या परब्रह्मप्रपूजिता । ब्राह्मणस्यैव गायत्री चिदानंदस्वरूपिणी ॥ ४ ॥ ब्रह्मण्यवर्त्मवातेयं प्राणात्मा नित्यनूतनात् । नित्यं तिष्ठति सानंदा कुंडली तव विग्रहे ॥ ५ ॥ अतिगोप्यं महत्पुण्यं त्रिकोटीतीर्थसंयुतम् । सर्वज्ञानमयी देवी सर्वदानमयी सदा ॥ ६ ॥ सर्वसिद्धिमयी देवी पार्वती प्राणवल्लभा । ॐ ॐ ॐ ॐ भूः ॐ ॐ भुवः ॐ ॐ स्वः ॐ ॐ त ॐ ॐ त्स ॐ ॐ वि ॐ ॐ तु ॐ ॐ व ॐ ॐ रे ॐ ॐ ण्यं ॐ ॐ भ ॐ ॐ र्गो ॐ ॐ दे ॐ ॐ व ॐ ॐ स्य ॐ ॐ धी ॐ ॐ म ॐ ॐ हि ॐ ॐ धि ॐ ॐ यो ॐ ॐ यो ॐ ॐ नः ॐ ॐ प्र ॐ ॐ चो ॐ ॐ द ॐ ॐ यात् ॐ ॐ । ॐ भूः ॐ पातु मे मूलं चतुर्दलसमन्वितम् । ॐ भुवः ॐ पातु मे लिङ्गं सजलं षड्दलात्मकम् ॥ ७ ॥ ॐ स्वः ॐ पातु मे कंठं सकाशं दलषोडशम् । ॐ त ॐ पातु मे रूपं ब्रह्माणं कारणं परम् ॥ ८ ॥ ॐ त्स ॐ पातु मे ब्रह्माणं पातु सदा मम । ॐ वि ॐ पातु मे गंधं सदा शिशिरसंयुतम् ॥ ९ ॥ ॐ तु ॐ पातु मे स्पर्शं शरीरस्य च कारणम् । ॐ व ॐ पातु मे शब्दं शब्दविग्रहकारणम् ॥ १० ॥ ॐ रे ॐ

पातु मे नित्यं सदा तत्त्वशरीरकम् । ॐ र्यं ॐ पातु मे ह्यक्षं सर्वतत्त्वैककारणम् ॥ ११ ॥ ॐ भ ॐ पातु मे श्रोत्रं श्रवणस्य च कारणम् । ॐ र्गो ॐ पातु मे घ्राणं गंधोपादानकारणम् ॥ १२ ॥ ॐ दे ॐ पातु मे वास्यं सभायां शब्दरूपिणी । ॐ व ॐ पातु मे बाहुयुगलं ब्रह्मकारणम् ॥ १३ ॥ ॐ स्य ॐ पातु मे लिङ्गं षड्दलं षड्दलैर्युतम् । ॐ धी ॐ पातु मे नित्यं प्रकृतिं शब्दकारणम् ॥ १४ ॥ ॐ म ॐ पातु मे नित्यं मनोब्रह्मस्वरूपिणम् । ॐ हि ॐ पातु मे बुद्धिं परब्रह्ममयं सदा ॥ १५ ॥ ॐ धिय ॐ पातु मे नित्यमहंकारं यथा तथा । ॐ यो ॐ पातु मे नित्यं जलं सर्वत्र सर्वदा । ॐ नः ॐ पातु मे नित्यं तेजःपुञ्जो यथा तथा ॥ १६ ॥ ॐ प्र ॐ पातु मे नित्यमनिलं कार्यकारणम् । ॐ चो ॐ पातु मे नित्यमाकाशं शिवसन्निभम् ॥ १७ ॥ ॐ द ॐ पातु मे जिह्वां जपयज्ञस्य कारणम् । ॐ यात् ॐ मे नित्यं शिवज्ञानमयं सदा ॥ १८ ॥ तत्त्वानि पातु मे नित्यं गायत्री परदैवतम् । कृष्णा मे सततं पातु ब्रह्माणी भूर्भुवःस्वरोम् ॥ १९ ॥ ॐ अस्य श्रीगायत्रीकवचस्य परब्रह्म ऋषिः, ऋग्यजुःसामाथर्वाणश्छन्दांसि, ब्रह्मा देवता, धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । कामक्रोधादिकं सर्वं स्मरणाद्याति दूरतः । इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद्यदि ॥ २० ॥ शतकोटिजपेनापि न सिद्धिर्जायते प्रिये । गायत्रीकवचात्सर्वं स्मरणात्सिध्यति ध्रुवम् ॥ २१ ॥ पठित्वा कवचं विप्रो गायत्रीं सकृदुच्चरेत् । सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद्द्विजः ॥ २२ ॥ इदं कवचमज्ञात्वा त्वन्यथः कवचं पठेत् । सर्वं तस्य वृथा देवि त्रैलोक्यमंगलादिकम् ॥ २३ ॥ गायत्रीकवचं यस्य

जिह्वायां विद्यते सदा। तदाऽमृतमयी जिह्वा पवित्रा जपपूजने ॥ २४ ॥ इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद्यदि । व्यर्थं भवति चार्वङ्गि तज्जपो वनरोदनम् ॥ २५ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महांति पातकान्यस्य स्मरणाद्यान्ति दूरतः ॥ २६ ॥ नश्वरं मांसमेदोऽस्थिमज्जाशुक्रविनिर्मितम् ॥ २७ ॥ वातपित्तकफैर्युक्तं स्थूलदेहं तदुच्यते । सूक्ष्मं ज्योतिर्मयं देहं पञ्चभूतात्मकं विदुः ॥ २८ ॥ महापद्मवनांतस्थं सर्वावयवसंयुतम् । आधारदेहसंबंधाद्गायत्री ब्रह्मणः स्वयम् ॥ २९ ॥ एतदेव परं ब्रह्म कथिते उभयात्मके । ब्राह्मणस्यैव जीवात्मा गायत्रीसहितो वपुः ॥ ३० ॥ आत्मनां हृदयांभोजे प्रदीपकलिकोपमम् । निर्धूमं च यथा ज्योतिस्तैलाग्निवर्तियोगतः ॥ ३१ ॥ तज्ज्योतिः परमं ब्रह्म शुभदं नात्र संशयः । गायत्रीकवचं न्यासं मातृकास्थानसंविधु ॥ ३२ ॥ स कृत्वा ब्राह्मणश्रेष्ठ चान्यन्न्यासं समाचरेत् । अन्यन्न्यासे तथा सिद्धिरन्यथाऽरण्यरोदनम् ॥ ३३ ॥ गायत्रीन्यासमात्रेण परब्रह्ममयो द्विजः । इदं कवचमज्ञात्वा ब्रह्मचर्यं करोति यः ॥ ३४ ॥ ब्रह्मचर्यं भवेद्व्यर्थं गायत्रीकवचं विना । कवचस्य प्रसादेन ब्राह्मणो ज्वलदग्निवत् ॥ ३५ ॥ कवचं परमेशानि सृष्टिस्थितिलयात्मकम् । कवचं ब्राह्मण इदं प्रातरुत्थाय यः पठेत् ॥ ३६ ॥ गायत्रीं स सकृत्स्मृत्वा जपलक्षफलं भवेत् । गायत्रीं दशधा जप्त्वा दशलक्षफलं भवेत् ॥ ३७ ॥ एवं क्रमेण गायत्रीं शतधा प्रजपेद्यदि । शतलक्षफलं प्राप्य विहरेद्देववद्भुवि ॥ ३८ ॥ सूर्येन्द्वोर्ग्रहणे चेदं पठित्वा कवचं द्विजः । सकृद्यदि जपेद्विद्यां गायत्रीं परमाक्षराम् ॥ ३९ ॥ तत्क्षणात्तु भवेत्सिद्धो ब्रह्मसायुज्यमाप्नुयात् । इदं कवचमज्ञात्वा गायत्रीं प्रजपेत्तु यः ॥ ४० ॥ जप एव वृथा तस्य निस्तेजो न च सिद्धिदः । यः पठेत्कवचं देवि सततं शिव-

सन्निधौ ॥ ४१ ॥ विष्णुदेवस्य कवचं प्रजपेच्छक्तिसन्निधौ । तेजः-पुञ्जमयो विप्रस्तत्क्षणाज्जायते ध्रुवम् ॥ ४२ ॥ इति श्रीरुद्रयामले पार्वतीश्वरसंवादे गायत्रीकवचं संपूर्णम् ॥

## १४२. गायत्रीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यस्मिन्दृष्टे नैव दृश्येत विश्वं यस्मिँल्लब्धे नैव लब्धव्यशेषः । यस्मिन् ज्ञाते नैव वेद्यांतराशा गायत्र्यर्थं पंचवक्त्रं प्रपद्ये ॥ १ ॥ या गायत्री नामधेयं महार्थं सार्थं कर्तुं संप्रविष्टोपनाये । मार्गे मंत्रान् सर्वशो दर्शयित्वा तारे लीना सर्ववेदार्थदीपे ॥ २ ॥ श्रोतव्यं मे वाक्यमेतत्समस्तैर्वर्णैर्भाव्यं स्वाश्रमप्राप्तचिह्नैः । तेभ्यस्तुर्येप्यच्छंकरः श्रीहरिर्वा प्रष्टव्यो वः श्रीगुरुः स्वैर्विनीतैः ॥ ३ ॥ गायत्री चेत्सम्यगास्ता क्रमेण सा संजप्ता कर्मशुद्ध्या द्विजेन । सा विज्ञाता गोपिता संप्रदायात्किं नो दद्याद्वेदमाता मता चेत् ॥ ४ ॥ बुद्धावीशारोहणं कर्म तस्याः सा चेत्त्यक्ता त्यक्त ईशो द्विजेन । यस्यां सर्वा देवताः संप्रविष्टाः सर्वास्मानं मंत्रराजं प्रपद्ये ॥ ५ ॥ विष्णुः शंभुर्भास्करो विघ्नराजो या वा का वा देवताऽस्या विभूतिः । सैकोपास्या वेदमार्गैकनिष्ठैः क्षीराब्धौ किं दुग्धभिक्षाप्रयासः ॥ ६ ॥ नेयं लभ्या मानुषाणां श्रपाणां गंगाशब्दो मानुषत्वैकहेतुः । यस्या लब्धौ वैदिकाग्रेसराणां वंशे वेदैः संस्कृते जन्महेतुः ॥ ७ ॥ मंत्रैः किं तैर्यैः प्रतीक्ष्येत देवी गायत्र्यम्बा संप्रवेष्टुं द्विजेषु । देवैः किं तैरग्निना पुष्टिमद्भिस्तस्मात्ब्रह्मणोन्नापितैः सा निषेव्या ॥ ८ ॥ वृत्तं भस्म श्रीत्रिपादांबयैतत्त्र्यंबरेशः शेषरूपं स्वरूपम् । तस्माद्भस्म प्रोच्यते भासनाद्य मूर्तिर्गायत्र्यम्बयैक्या त्रिपुंड्रम् ॥ ९ ॥ शैवोऽन्यो वा यां विना किं द्विजः स्याद्वैष्णवोऽन्यो वा दीक्षया वेदमातुः । तस्माच्छैवो वैष्णवोऽन्येषु गण्यो

गायत्र्यास्ता ब्रह्मता वेदमान्या ॥ १० ॥ भेदापोहव्याप्तृतिं सा बिभर्ति ध्यानैर्भिन्नैर्ध्याननिष्ठैकवेद्याम् । तस्मान्नामान्यत्र संयान्ति सर्वाण्यस्या निष्ठा शांभवी वैष्णवी च ॥ ११ ॥ लोकस्थास्ते विष्णुरुद्रादिदेवाः कैश्चित्कामैः कैश्चिदेवाधिकारैः । गायत्र्यास्ता भूतयः सेवनीया गायत्र्यां ते सेविताः संभ्रमेण ॥ १२ ॥ ब्रह्मत्वं चेद्ब्रह्मकामोऽस्युपास्स्व गायत्रीं चेल्लोककामोऽन्यदेवम् । कामो ज्ञातः स्वीयपादप्रवृत्त्या वादः को वा तृप्तिहीने प्रवृत्तिः ॥ १३ ॥ बुद्धेः साक्षी बुद्धिगम्यो जपादौ गायत्र्यर्थः सोऽनघो वेदसारः । तद्ब्रह्मैव ब्रह्मतोपासकस्याप्येवं मंत्रः कोऽस्ति तंत्रे पुराणे ॥ १४ ॥ जात्यश्वः किं जातिमाप्तुं सकामो गत्यभ्यासात् स्पष्टतामेति जातिः । ब्रह्मत्वासौ कः प्रयासो द्विजानां यद्गायत्र्या व्यज्यते चाष्टमेऽब्दे ॥ १५ ॥ ब्रह्मत्वस्य ख्यापनार्थं प्रविष्टा गायत्रीयं तावताऽस्य द्विजत्वम् । कर्णद्वारा ब्रह्मजन्मप्रदानादुक्तो वेदे ब्राह्मणो ब्रह्मनिष्ठः ॥ १६ ॥ एषा निष्ठा दुर्लभा मर्त्यबुद्धौ तस्माल्लोके वैष्णवाः शांभवाश्च । भिन्नं भिन्नं मार्गमास्थाय वेदं क्षामं कुर्वंत्यास्तिकच्छद्मने मे ॥ १७ ॥ पक्षिद्वन्द्वं विद्यते स्वस्वदेहे भोक्तारं सा ध्यानमाचष्ट एतत् । यावत्क्षीणा भोक्तृता स्यात्ततस्तु ज्ञात्वा ब्रूयाद्ब्रह्मतां स्वस्य विद्वान् ॥ १८ ॥ गायत्र्यर्थं नो विजानाति कश्चित्तस्मादन्यं देवमाह द्विजोऽपि । विज्ञातश्चेत्सर्ववादस्य शांतिर्मुक्तिर्हस्ते गायमानस्य मंत्रम् ॥ १९ ॥ भस्मांतं चेद्विश्वमेतत्समस्तं भस्मोद्भूतं भस्म संभासते च । तस्माद्ब्रह्म प्राहुराद्यैर्वचोभिर्वेदास्तस्माद्भस्म लिंगं द्विजानाम् ॥ २० ॥ इति श्रीशंकराचार्याभिप्रायः कृष्णभिक्षुणा । वर्णितस्तेन गायत्री विभूत्या सह नन्दतु ॥ २१ ॥

इति श्रीमत्परमहंसपरिव्राजककृष्णानंदसरस्वतीप्रणीतं गायत्रीस्तोत्रं संपूर्णम् ॥

## १४३. गायत्रीकवचम् ।

श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच ॥ स्वामिन्सर्वजगन्नाथ संशयोऽस्ति महान्मम । चतुःषष्टिकलानां च पातकानां च तद्वद् ॥ १ ॥ मुच्यते केन पुण्येन ब्रह्मरूपः कथं भवेत् । देहं च देवतारूपं मंत्ररूपं विशेषतः ॥ २ ॥ क्रमतः श्रोतुमिच्छामि कवचं विधिपूर्वकम् । ब्रह्मोवाच ॥ गायत्र्याः कवचस्यास्य ब्रह्मा विष्णुः शिवो ऋषिः ॥ ३ ॥ ऋग्यजुःसामाथर्वाणि छंदांसि परिकीर्तिताः । परब्रह्मस्वरूपा सा गायत्री देवता स्मृता ॥ ४ ॥ रक्षाहीनं तु यत्स्थानं कवचेन विना कृतम् । सर्वं सर्वत्र संरक्षेत्सर्वांगं भुवनेश्वरी ॥ ५ ॥ बीजं भर्गश्च युक्तिश्च धियः कीलकमेव च । पुरुषार्थविनियोगो यो नश्च परिकीर्तितः ॥ ६ ॥ ऋषिं मूर्ध्नि न्यसेत्पूर्वं मुखे छंद उदीरितम् । देवतां हृदि विन्यस्य गुह्ये बीजं नियोजयेत् ॥ ७ ॥ शक्तिं विन्यस्य पद्योर्नाभौ तु कीलकं न्यसेत् । द्वात्रिंशत्तु महाविद्याः सांख्यायनसगोत्रजाः ॥ ८ ॥ द्वादशलक्षसंयुक्ता विनियोगाः पृथक्पृथक् । एवं न्यासविधिं कृत्वा करांगं विधिपूर्वकम् ॥ ९ ॥ व्याहृतित्रयमुच्चार्य ह्यनुलोमविलोमतः । चतुरक्षरसंयुक्तं करांगन्यासमाचरेत् ॥ १० ॥ आवाहनादिभेदं च दश मुद्राः प्रदर्शयेत् । सा पातु वरदा देवी अंगप्रत्यंगसंगमे ॥ ११ ॥ ध्यानं मुद्रां नमस्कारं गुरुमंत्रं तथैव च । संयोगमात्मसिद्धिं च बहुविधं किं विचारयेत् ॥ १२ ॥ अस्य श्रीगायत्रीकवचस्य ब्रह्मविष्णुरुद्रा ऋषयः, ऋग्यजुःसामाथर्वाणि छंदांसि, परब्रह्मस्वरूपिणी गायत्री देवता, भूर्बीजं, भुवः शक्तिः, स्वाहा कीलकं, श्रीगायत्रीप्रीत्यर्थं जपे विनियोगः । वर्णास्त्रां कुंडिकाहस्तां शुद्धनिर्मलज्योतिषीम् । सर्वतत्त्वमयीं वन्दे गायत्रीं वेदमातरम् ॥ १३ ॥ अथ ध्यानम् ॥

मुक्ता विद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयांकुशकशां शूलं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहन्तीं भजे ॥ १४ ॥ ॐ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे । ब्रह्मविद्या च मे पश्चादुत्तरे मां सरस्वती ॥१५॥ पावकीं मे दिशं रक्षेत् पावकोज्ज्वलशालिनी । यातुधानीं दिशं रक्षेद्यातुधानगणार्दिनी ॥ १६ ॥ पावमानीं दिशं रक्षेत्पवमानविलासिनी । दिशं रौद्रीमवतु मे रुद्राणीरुद्ररूपिणी ॥१७॥ ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा । एवं दश दिशो रक्षेत् सर्वतो भुवनेश्वरी ॥ १८ ॥ ब्रह्मास्त्रस्मरणादेव वाचां सिद्धिः प्रजायते । ब्रह्म दण्डश्च मे पातु सर्वशस्त्रास्त्रभक्षकः ॥ १९ ॥ ब्रह्म शीर्षस्तथा पातु शत्रूणां वधकारकः । सप्त व्याहृतयः पातु सर्वदा बिंदुसंयुताः ॥ २० ॥ वेदमाता च मां पातु सरहस्या सदैवता । देवीसूक्तं सदा पातु सहस्राक्षरदेवता ॥ २१ ॥ चतुःषष्टिकला विद्या दिव्याद्या पातु देवता । बीजशक्तिश्च मे पातु पातु विक्रमदेवता ॥ २२ ॥ तत्पदं पातु मे पादौ जंघे मे सवितुः-पदम् । वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥ २३ ॥ देवस्य मे तु हृदयं धीमहीति गलं तथा । धियो मे पातु जिह्वायां यः-पदं पातु लोचने ॥ २४ ॥ ललाटे नः-पदं पातु मूर्धानं मे प्रचोदयात् । तद्वर्णः पातु मूर्धानं सकारः पातु भालकम् ॥ २५ ॥ चक्षुषी मे विकारस्तु श्रोत्रं रक्षेत्तु कारकः । नासापुटे वंकारो मे रेकारस्तु कपोलयोः ॥ २६ ॥ णिकारस्त्वधरोष्ठे च यकारस्तूर्ध्व ओष्ठके । आस्यमध्ये भकारस्तु गोकारस्तु कपोलयोः ॥२७॥ देकारः कंठदेशे च वकारः स्कंधदेशयोः । स्यकारो दक्षिणं हस्तं धीकारो वामहस्तकम् ॥ २८ ॥ मकारो हृदयं रक्षेद्धिकारो जठरं तथा । धिकारो

नाभिदेशं तु योकारस्तु कटिद्वयम् ॥ २९ ॥ गुह्यं रक्षतु योकार ऊरू मे नः पदाक्षरम् । प्रकारो जानुनी रक्षेचोकारो जंघदेशयोः ॥ ३० ॥ दकारो गुल्फदेशं तु यात्कारः पादयुग्मकम् । जातवेदेति गायत्री त्र्यंबकेति दशाक्षरा ॥ ३१ ॥ सर्वतः सर्वदा पातु आपोज्योतीति षोडशी । इदं तु कवचं दिव्यं बाधाशतविनाशकम् ॥ ३२ ॥ चतुःषष्टिकलाविद्यासकलैश्वर्यसिद्धिदम् । जपारंभे च हृदयं जपांते कवचं पठेत् ॥ ३३ ॥ स्त्रीगोब्राह्मणमित्रादिद्रोहाद्यखिलपातकैः । मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥ ३४ ॥ पुष्पांजलिं च गायत्र्या मूलेनैव पठेत्सकृत् । शतसाहस्रवर्षाणां पूजायाः फलमाप्नुयात् ॥ ३५ ॥ भूर्जपत्रे लिखित्वैतत् स्वकंठे धारयेद्यदि । शिखायां दक्षिणे बाहौ कंठे वा धारयेद्बुधः ॥ ३६ ॥ त्रैलोक्यं क्षोभयेत्सर्वं त्रैलोक्यं दहति क्षणात् । पुत्रवान् धनवान् श्रीमान्नानाविद्यानिधिर्भवेत् ॥ ३७ ॥ ब्रह्मास्त्रादीनि सर्वाणि तदंगस्पर्शनात्ततः । भवंति तस्य तुच्छानि किमन्यत्कथयामि ते ॥ ३८ ॥ अभिमंत्रितगायत्रीकवचं मानसं पठेत् । तज्जलं पिबतो नित्यं पुरश्चर्याफलं भवेत् ॥ ३९ ॥ लघुसामान्यकं मंत्रं महामंत्रं तथैव च । यो वेत्ति धारणां युंजन् जीवन्मुक्तः स उच्यते ॥ ४० ॥ सप्तव्याहृतिविप्रेन्द्र सप्तावस्थाः प्रकीर्तिताः । सप्तजीवशता नित्यं व्याहृती अग्निरूपिणी ॥ ४१ ॥ प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु । सर्वेषामेव पापानां संकरे समुपस्थिते ॥ ४२ ॥ शतं सहस्रमभ्यर्च्य गायत्री पावनं महत् । दशशतमष्टोत्तरशतं गायत्री पावनं महत् ॥ ४३ ॥ भक्तियुक्तो भवेद्विप्रः संध्याकर्म समाचरेत् । काले काले प्रकर्तव्यं सिद्धिर्भवति नान्यथा ॥ ४४ ॥ प्रणवं पूर्वमुच्चृत्य भूर्भुवःस्वस्तथैव च । तुर्यं सहैव गायत्रीजप

एवमुदाहृतम् ॥ ४५ ॥ तुरीयपादमुत्सृज्य गायत्रीं च जपेद्द्विजः । स मूढो नरकं याति कालसूत्रमधोगतिः ॥ ४६ ॥ मंत्रादौ जननं प्रोक्तं मंत्रान्ते मृतसूत्रकम् । उभयोर्दोषनिर्मुक्तं गायत्री सफला भवेत् ॥ ४७ ॥ मंत्रादौ पाशबीजं च मंत्रांते कुशबीजकम् । मंत्रमध्ये तु या माया गायत्री सफला भवेत् ॥ ४८ ॥ वाचिकस्त्वहमेव स्यादुपांशु शतमुच्यते । सहस्रं मानसं प्रोक्तं त्रिविधं जपलक्षणम् ॥ ४९ ॥ अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् । जपं चाक्षस्वरूपेणानामिकामध्यपर्वणि ॥ ५० ॥ अनामा मध्यया हीना कनिष्ठादिक्रमेण तु । तर्जनीमूलपर्यंतं गायत्रीजपलक्षणम् ॥ ५१ ॥ पर्वभिस्तु जपेदेवमन्यत्र नियमः स्मृतः । गायत्री वेदमूलत्वाद्वेदः पर्वसु गीयते ॥ ५२ ॥ दशभिर्जन्मजनितं शतेनैव पुरा कृतम् । त्रियुगं तु सहस्राणि गायत्री हंति किल्बिषम् ॥ ५३ ॥ प्रातःकालेषु कर्तव्यं सिद्धिं विप्रो य इच्छति । नादालये समाधिश्च संध्यायां समुपासते ॥ ५४ ॥ अंगुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलंघने । असंख्यया च यज्जप्तं तज्जप्तं निष्फलं भवेत् ॥ ५५ ॥ विना वस्त्रं प्रकुर्वीत गायत्री निष्फला भवेत् । वस्त्रपुच्छं न जानाति वृथा तस्य परिश्रमः ॥ ५६ ॥ गायत्रीं तु परित्यज्य अन्यमंत्रमुपासते । सिद्धान्नं च परित्यज्य भिक्षामटति दुर्मतिः ॥ ५७ ॥ ऋषिश्छंदो देवताख्या बीजं शक्तिश्च कीलकम् । नियोगं न च जानाति गायत्री निष्फला भवेत् ॥ ५८ ॥ वर्णमुद्राध्यानपद्मावाहनविसर्जनम् । दीपं चक्रं न जानाति गायत्री निष्फला भवेत् ॥ ५९ ॥ शक्तिर्न्यासस्तथा स्थानं मंत्रसंबोधनं परम् । त्रिविधं यो न जानाति गायत्री तस्य निष्फला ॥ ६० ॥ पंचोपचारकांश्चैव होमद्रव्यं तथैव च । पंचांगं च विना नित्यं

